वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च । सुपक्षे पर्वतवरे चत्वार्यायतनानि च ॥ ६३
गन्धर्वैः किंनरैर्यक्षैर्नागैर्विद्याधरोत्तमैः । सिद्धैर्हितेषु स्थानेषु नित्यमिष्टः प्रपूज्यते ॥ ६४

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९८८

---

अथ चत्वारिंशोऽध्यायः ।

---

## भुवनविन्यासः ।

सूत उवाच—

मर्यादापर्वते शुभ्रे देवकूटं निबोधत । विस्तीर्णे शिखरे तस्य कूटे गिरिवरस्य हि ॥ १
समन्ताद्योजनशतं महाभवनमण्डितम् । ज मक्षेत्रं सुपर्णस्य वैनतेयस्य धीमतः ॥ २
नैकैर्महापक्षिगणैर्गारुडैः शीघ्रविक्रमैः । संपूर्णवीर्यसंपन्नैर्द्रमनैकरमारिभिः ॥ ३
पक्षिराजस्य भवनं प्रथमं तन्महात्मनः । महावायुप्रवेगस्य शाल्मलिद्वीपवासिनः ॥ ४
तस्यैव चारुमूर्धस्तु कूटेषु च महीधिषु । दक्षिणेषु विचित्रेषु सप्तस्वपि तु शोभिनः ॥ ५
[ *संध्याभ्रोभाः समुदिता रुक्मप्राकारतोरणाः । महाभवनमालाभिः शोभिता देवनिर्मिताः ॥ ६
त्रिंशद्योजनविस्तीर्णाश्चत्वारिंशत्तथायताः । सप्त गन्धर्वनगरा नरनारीसमाकुलाः ॥ ७
आग्नेया नाम गन्धर्वा महाबलपराक्रमाः । कुबेरानुचरा दीप्तास्तेषां ते भवनोत्तमाः ॥ ८
तस्य चोत्तरकूटेषु भुवनस्य महागिरेः । हर्म्यप्रासादबद्धं च उद्यानवनशोभितम् ॥ ९
पुरमाशीविषैः पूर्णं महाप्राकारतोरणम् ] । वादित्रशतनिर्घोषैरानन्दितवनान्तरम् ॥ १०
दुष्प्रसह्यममित्राणां त्रिंशद्योजनमण्डलम् । नगरं सैंहिकेयानामसुराणां देवविद्विषाम् ॥
सिद्धदेवर्षिचरितं देवकूटे निबोधत ॥ ११
द्वितीये द्विजशार्दूला मर्यादापर्वते शुभे । महाभवनमालाभिर्नानावर्णाभिरावृतम् ॥ १२
सुवर्णमणिचित्राभिरनेकाभिरलंकृतम् । विशालरथ्यं दुर्धर्षं नित्यं प्रमुदितं शिवम् ॥ १३
नरनारीगणाकीर्णं प्रांशुप्राकारतोरणम् । षष्टियोजनविस्तीर्णं शतयोजनमायतम् ॥ १४
नगरं कालकेयानामसुराणां दुरासदम् । देवकूटतटे रम्ये संनिविष्टं सुदुर्जयम् ॥
महाभ्रचयसंकाशं सुनाभं नाम विश्रुतम् ॥ १५
तस्यैव दक्षिणे कूटे त्रिंशद्योजनविस्तरम् । द्विषष्टियोजनायामं हेमप्राकारतोरणम् ॥ १६
हृष्टपुष्टावलिप्तानामावासाः कामरूपिणाम् । औत्कचानां प्रमुदितं राक्षसानां महापुरम् ॥ १७
मध्यमे तु महाकूटे देवकूटस्य वै गिरेः । सुवर्णमणिपाषाणैश्चित्रैः श्लक्ष्णतरैः शुभैः ॥
प्रासादशतसंघातैर्नैकारोहसमाकुलम् ॥ १८

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

---

१ ग,घ,ङ 'मिरयः म' । २ क. °यांदा. प° । ३ घ. च । ४ घ. ङ. °भित. । स° । ५ घ. ङ. °भास्ता स° । ६ घ. 'सुभ्र' । ७ क घ. ङ. °म् । दुष्प्र म° । ८ घ. °म् । महर्षिदेवच° । ९ घ ङ. °नाम भा° । १० घ. ङ. 'हर्षु-दाम' । ११ घ. ङ. 'वायु श°' ।

स्निग्धपर्णमहामूलमनेकस्कन्धवाहनम् । रम्यं ह्यविरलच्छायं दशयोजनमण्डलम् ॥ १९
तत्र भूतवटं नाम नानाभूतगणालयम् । महादेवस्य प्रथितं त्र्यम्बकस्य महात्मनः ॥
दीप्तमायतनं तत्र सर्वलोकेषु विश्रुतम् ॥ २०
वराहगजसिंहर्क्षशार्दूलकरभाननैः । गृध्रोलूकमुखैश्चैव मेषोष्ट्राजमहामुखैः ॥ २१
कदम्बैर्विकटैः स्थूलैर्लम्बकेशतनूरुहैः । नानावर्णाकृतिधरैर्नानासंस्थानसंस्थितैः ॥ २२
दीप्तैरनेकैरुग्रास्यैर्भूतैरुग्रपराक्रमैः । अशून्यमभवन्नित्यं महापारिषदैस्तथा ॥ २३
तत्र भूतपतेर्भूता नित्यं पूजां प्रयुञ्जते । झर्झरैः शङ्खपटहैर्भेरीडिण्डिमगोमुखैः ॥ २४
रणितालसितोद्गीतैर्नित्यं वल्गितवर्जितैः । विस्फूर्जितशतैस्तत्र पूजायुक्ता गणेश्वराः ॥
प्रीताः पुरारिप्रमथास्तत्र क्रीडापराः सदा ॥ २५
सिद्धदेवर्षिगन्धर्वयक्षनागेन्द्रपूजितः । स्थाने तस्मिन्महादेवः साक्षाल्लोकशिवः शिवः ॥ २६

इति श्रीमहापुराणे वायुप्रोक्तेऽनुषङ्गपादे भुवनविन्यासो नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०१४

---

अथैकचत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

सूत उवाच—

विविक्तचारुशिखरं पवित्रं शङ्खवर्चसम् । कैलासं देवभक्तानामालयं सुकृतात्मनाम् ॥ १
तस्य कूटतटे रम्ये मध्यमे कुन्दसंनिभे । योजनानां शतायामे पञ्चाशच्च तथाऽऽयतम् ॥ २
सुवर्णमणिचित्राभिरनेकाभिरलंकृतम् । महाभवनमालाभिर्भूषितं नैकविस्तरम् ॥ ३
धनाध्यक्षस्य देवस्य कुबेरस्य महात्मनः । नगरं तदनाधृष्यमृद्धियुक्तं मुदा युतम् ॥ ४
तस्य मध्ये सभा रम्या नानाकनकमण्डिता । विपुला नाम विख्याता विपुलस्तम्भतोरणा ५
तत्र तत्पुष्पकं नाम नानारत्नविभूषितम् । महाविमानं रुचिरं सर्वकामगुणैर्युतम् ॥ ६
मनोजवं कामगमं हेमजालविभूषितम् । वाहनं यक्षराजस्य कुबेरस्य महात्मनः ॥ ७
तत्रैकपिङ्गलो देवो महादेवमतः स्वयम् । वसति स्म स यक्षेन्द्रः सर्वभूतनमस्कृतः ॥ ८
तत्राप्सरोगणैर्यक्षैर्गन्धर्वैः सिद्ध[illegible] [illegible] कुबेरो देवसत्तमः ॥ ९
तत्र पद्ममहापद्मौ तथा मकरक[illegible] [illegible]मः ॥ १०
अष्टावेतेऽक्षया दिव्या धनेश[illegible] [illegible]त समायां रत्नसंचयाः ॥११
तथेन्द्राग्नियमादीनां देवाना[illegible] [illegible] आवासो यत्र यक्षेश्वरः प्रभुः ॥ १२
कृत्वा पूर्वमुपस्थानं यक्षेन्द्र[illegible] [illegible]च्छन्ति ये यस्य विविधाः परिचारकाः १३
तत्र मन्दाकिनी नाम सुरम[illegible] [illegible]दका । सुवर्णमणिसोपाना नानापुष्पोत्कटोत्तरा [illegible]

१ घ. ङ. झरैः । ग. शङ्खै. । २ ङ. सर्जि° । ३ ग. घ. ङ. °त । आविश° । ४ घ.[illegible]
५ ग. घ. ङ. °दते । यु° । ६ ग. घ. ङ. °रत्नतरम् । ७ क °संविताः । [illegible] । ८ ग. घ. ङ ।
९ ग. घ. ङ. °म स्वस्या वि° ।

वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च । सुपक्षे पर्वतवरे चत्वार्यायतनानि च ॥ ६३
गन्धर्वैः किंनरैर्यक्षैर्नागैर्विद्याधरोत्तमैः । सिद्धैर्हितेषु स्थानेषु नित्यमिष्टः प्रपूज्यते ॥ ६४

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२८८

---

अथ चत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

सूत उवाच—

मर्यादापर्वते शुभ्रे देवकूटं निबोधत । विस्तीर्णे शिखरे तस्य कूटे गिरिवरस्य हि ॥ १
समन्ताद्योजनशते महाभवनमण्डितम् । जन्मक्षेत्रं सुपर्णस्य वैनतेयस्य धीमतः ॥ २
नैकैर्महापक्षिगणैर्गारुडैः शीघ्रविक्रमैः । संपूर्णवीर्यसंपन्नैर्दमनैरुरगारिभिः ॥ ३
पक्षिराजस्य भवनं प्रथमं तन्महात्मनः । महावायुसमवेगस्य शाल्मलिद्वीपवासिनः ॥ ४
तस्यैव चारुपूर्वेस्तु कूटेषु च महीधपु । दक्षिणेषु विचित्रेषु सप्तस्वपि तु शोभिनः ॥ ५
[*संध्याभ्राभाः समुदिता रुक्मप्राकारतोरणाः । महाभवनमालाभिः शोभिता देवनिर्मिताः ॥ ६
त्रिंशद्योजनविस्तीर्णाश्चत्वारिंशत्तमायताः । सप्त गन्धर्वनगरा नरनारीसमाकुलाः ॥ ७
आश्रेया नाम गन्धर्वा महाबलपराक्रमाः । कुबेरानुचरा दीप्तास्तेषां ते भवनोत्तमाः ॥ ८
तस्य चोत्तरकूटेषु भुवनस्य महागिरेः । हर्म्यप्रासादसंबद्धं च उद्यानवनशोभितम् ॥ ९
पुरमाशीविषैः पूर्णं महाप्राकारतोरणम् ] । वादित्रशतनिर्घोषैरानन्दितवनान्तरम् ॥ १०
दुष्प्रसह्यमित्राणां त्रिंशद्योजनमण्डलम् । नगरं सैंहिकेयानामसुराणां देवविद्विषाम् ॥
सिद्धदेवर्षिचरितं देवकूटे निबोधत ॥ ११
द्वितीये द्विजशार्दूला मर्यादापर्वते शुभे । महाभवनमालाभिर्नानावर्णाभिरावृतम् ॥ १२
सुवर्णमणिचित्राभिरनेकाभिरलंकृतम् । विशालरथ्यं दुर्धर्षं नित्यं प्रमुदितं शिवम् ॥ १३
नरनारीगणाकीर्णं प्रांशुप्राकारतोरणम् । षष्टियोजनविस्तीर्णं शतयोजनमायतम् ॥ १४
नगरं कालकेयानामसुराणां दुरासदम् । देवकूटतटे रम्ये संनिविष्टं सुदुर्जयम् ॥
महाभ्रचयसंकाशं सुनासं नाम विश्रुतम् ॥ १५
तस्यैव दक्षिणे कूटे त्रिंशद्योजनविस्तरम् । द्विषष्टियोजनायामं हेमप्राकारतोरणम् ॥ १६
हृष्टपुष्टाबलिष्ठानामावासाः कामरूपिणाम् । औत्कचानां प्रमुदितं राक्षसानां महापुरम् ॥ १७
मध्यमे तु महाकूटे देवकूटस्य वै गिरेः । सुवर्णमणिपाषाणैश्चित्रैः श्लक्ष्णतरैः शुभैः ॥
शाखाशतसहस्राढ्यैर्नैकारोहसमाकुलम् ॥ १८

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

---

१ क.घ.ङ. °प्रजन्म °। २ क. °र्यादा प °। ३ घ च । ४ घ ङ. °भित. । स° । ५ घ ङ. °श्रास्ता. स° । ६ घ. °पु भर° । ७ क. घ. ङ. °म् । दुःप्र स° । ८ घ. °म् । महापदेवच° । ९ घ ङ. °नाम ना° । १० ग. ङ. °हृष्ट-प्राव° । ११ घ. ङ. °धान्य का° ।

( भुवनविन्यासः )

नैकैर्विमानसंघातैः मेकायद्भिर्नभस्तलम् । सिद्धैरुपस्पृष्टजला महापुण्यजला शिवा ॥ ६
वायुना प्रेर्यमाणा च अनेकाभोगगामिनी । परिवर्तत्यहरहो य(दर्य)था सूर्यस्तथैव सा ॥ ७
चत्वारिंशीतिमतता योजनानां समन्ततः । वेगेन कुर्वती मेरुं सा प्रयाता प्रदक्षिणम् ॥ ८
विभिद्यमाना सलिलैस्तैजसेनानिलेन च । मेरोरुत्तरकूटेषु पतिताऽथ चतुर्ष्वपि ॥ ९
मेरुकूटतटान्तेभ्य उत्कृष्टेभ्यो निवर्तिता । विकीर्यमाणसलिला चतुर्धा संसृतोदका ॥ १०
षष्टियोजनसाहस्रं निरालम्बनमम्बरम् । निपपात महाभागा [*मेरोस्तस्य चतुर्दिशम् ॥ ११
सा चतुर्ष्वभितश्चैव महापादेषु शोभना । पुण्या मन्दरपूर्वेण पतिता हि महानदी ॥ १२
पूर्वेणांशेन देवानां सर्वसिद्धगणालयम् । सुवर्णचित्रकटकं नैकनिर्झरकन्दरम् ॥ १३
प्लावयन्ती सशैलेन्द्रं मन्दरं चारुकन्दरम् । समसतापन्नपर्णैरनेकैः स्फाटिकोदकैः ॥ १४
तथा चैत्ररथं रम्यं प्लावयन्ती प्रदक्षिणम् । प्रविष्टा ह्यम्बरनदी ह्यरुणोदसरोवरम् ॥ १५
अरुणोदान्निर्गताऽथ शीतान्ते रम्यनिर्झरे । शैले सिद्धगणावासे निपपात सुगामिनी ॥ १६
सीता नाम महापुण्या नदीनां प्रवरा नदी । सा निकुञ्जनिरुद्धा तु अनेकाभोगगामिनी ॥ १७
शीतान्तशिखराद्भ्रष्टा मुकुञ्जे वरपर्वते । निपपात महाभागा तस्मादपि सुमञ्जसम् ॥ १८
तस्मान्माल्यवतं शैलं भावयन्ती वरापगा । वैकङ्कं समनुप्राप्ता वैकङ्कान्मणिपर्वतम् ॥
मणिपर्वतान्महाशैलमृषभं नैककन्दरम् ॥ १९
एवं शैलसहस्राणि दारयन्ती महानदी । पतिताऽथ महाशैले जठरे सिद्धसेविते ॥ २०
तस्मादपि महाशैलं देवकूटं तरङ्गिणी । तस्य कुक्षिसमुद्भ्रान्ता क्रमेण पृथिवीं गता ॥ २१
सैव स्थलीसहस्राणि शैलराजशतानि च । वनानि च विचित्राणि सरांसि विविधानि च ॥
प्लावयन्ती महाभागा ] विस्फारैश्चावलोकशः । नदीसहस्रानुगता महत्ता च महानदी ॥ २३
भद्राश्वं समहाद्वीपं प्लावयन्ती वरापगा । प्रविष्टा ह्यर्णवं पूर्वे पूर्वे द्वीपे महानदी ॥ २४
दक्षिणेऽपि प्रपक्षा या शैलेन्द्रे गन्धमादने । चित्रैः प्रपातैर्विविधैर्नैकविस्फारितोदका ॥ २५
तद्गन्धमादनवनं नन्दनं देवनन्दनम् । प्लावयन्ती महाभागा प्रयाता सा प्रदक्षिणम् ॥ २७
नाम्ना ह्यलकनन्देति सर्वलोकेषु विश्रुता । प्रविशत्युत्तरसरो मानसं देवमानसम् ॥ २७
मानसाच्छैलराजानं रम्यं त्रिशिखरं गता । त्रिकूटाच्छैलशिखरात्कलिङ्गशिखरं गता ॥ २८
कलिङ्गशिखराद्भ्रष्टा रुचके निपपात सा । रुचकान्निषधं प्राप्ता ताम्राभं निषधादपि ॥ २९
ताम्राभशिखराद्भ्रष्टा गता श्वेतोदरं गिरिम् । तस्मात्सुमूलं शैलेन्द्रं वसुधारं च पर्वतम् ॥ ३०
हेमकूटं गता तस्मादिन्द्रशृङ्गे ततो गता । तस्माद्गता महाशैलं ततश्चापि पिशाचकम् ॥ ३१
पिशाचकाच्छैलवरात्पञ्चकूटं गता पुनः । पञ्चकूटाच्च कैलासं देवावासं शिलोच्चयम् ॥ ३२
तस्य कुक्षिषु विभ्रान्ता नैककन्दरसानुषु । [+हिमवत्युत्तमनदी निपपाताचलोत्तमे ॥ ३३
सैवं शैलसहस्राणि दारयन्ती महानदी ।] स्थलीशतान्यनेकानि प्लावयन्त्याशुगामिनी ॥ ३४
वनानां च सहस्राणि कन्दराणां शतानि च । प्लावयन्ती महाभागा प्रयाता दक्षिणोदधिम् ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

---

१ ङ. प्रकाशयद्भिर्न° । २ ग. °भिद्दिन° । ३ घ. °दपुण्या° । ४ घ. °कैः स्फुरितोद° । ५ घ. °ति गता सं° ।

तत्र नागपतिश्चण्डश्चण्डो नाम दुरासदः। शतशीर्षो महाभागो विष्णुचक्राङ्कचिह्नितः ॥
इत्येवमष्टौ विज्ञेया विचित्रा देवपर्वताः ॥ ७३
पुरैरायतनैः पुण्यैः पुण्योदैश्च सरोवरैः। सुवर्णपर्वतैर्नैकैस्तथा रजतपर्वतैः ॥ ७४
नानारत्नप्रभासैश्च नैकैश्च मणिपर्वतैः। हरितालपर्वतैर्नैकैस्तथा हिङ्गुलकाचनैः ॥ ७५
शुद्धैर्मनःशिलाजालैर्भास्वरैररुणप्रभैः। नानाधातुविचित्रैश्च नैकैश्च मणिपर्वतैः ॥ ७६
पूर्णा वसुमती सर्वा गिरिभिर्नैकविस्तरैः। नदीकन्दरशैलाढ्यैरनेकैश्चित्रसानुभिः ॥ ७७
( * तेषु शैलसहस्रेषु नानावर्णेषु नित्यशः। दैत्यदानवगन्धर्वयक्षाणां च महालयैः। )
इत्येवमचलैर्युक्तैर्दैत्यराक्षससाधुभिः। किंनरोरगगन्धर्वैर्विचित्रैः सिद्धचारणैः ॥ ७९
गन्धर्वैरप्सरोभिश्च सेविता नैकविस्तराः। पुण्यकृद्भिः समाकीर्णाः केसराकृतयो नगाः ८०
गिरिजालं तु तन्मेरोः सिद्धलोकमिति स्मृतम्। चित्रं ज्ञानाश्रयोपेतं प्रचारं सुकृतात्मनाम् ॥
नात्युग्रकर्मसिद्धानां प्रतिमा मध्यमाः स्मृताः। स हि स्वर्ग इति ख्यातः क्रमस्त्वेष प्रकीर्तितः॥
चतुर्महाद्वीपवती सेयमुर्वी प्रकीर्तिता। नानावर्णप्रमाणैर्हि नानावर्णबलैस्तथा ॥ ८३
नानाभक्ष्यान्नपानैश्च नानाच्छादनभूषणैः ॥ प्रजाविकारैर्विविधैश्चित्रैरध्युषितैः सह ॥ ८४
चत्वारो नैकवर्णाढ्या महाद्वीपाः परिश्रुताः। भद्राश्च भरताश्चैव केतुमालाश्च पश्चिमाः ॥
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः ॥ ८५
सैषा चतुर्महाद्वीपा नानाद्वीपसमाकुला। पृथिवी कीर्तिता कृत्स्ना पद्माकारा मया द्विजाः ॥८६
तदेषा सान्तरद्वीपा सशैलवनकानना। पद्मेत्यभिहिता कृत्स्ना पृथिवी बहुविस्तरा ॥ ८७
सब्रह्मसदनं लोकं सदेवासुरमानुषम्। त्रिलोकमिति विख्यातं यत्सर्वैर्व्यवहार्यते ॥ ८८
चन्द्रादित्यावतप्तं यत्तज्जगत्परिगीयते। गन्धवर्णरसोपेतं शब्दस्पर्शगुणान्वितम् ॥ ८९
तं लोकपद्मं श्रुतिभिः पद्ममित्यभिधीयते। एष सर्वपुराणेषु क्रमः सुपरिनिश्चितः ॥ ९०

इति श्रीमहापुराणे वायुप्रोक्तेऽनुषङ्गपादे भुवनविन्यासो नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१०४

---

अथ द्विचत्वारिंशोऽध्यायः।

---

भुवनविन्यासः।

सूत उवाच—

सरोवरेभ्यः पुण्योदा देवनद्यो विनिर्गताः। [1]महौघतोया नद्यश्च ताः शृणुध्वं यथाक्रमम् ॥ १
आकाशाम्भोनिधेर्योऽसौ सोम इत्यभिधीयते। आधारः सर्वभूतानां देवानाममृताकरः ॥ २
तस्मात्प्रवृत्ता पुण्योदा नदी ह्याकाशगामिनी। सप्तमेनानिलपथा प्रयाता विमलोदका ॥ ३
सा ज्योतिषि निवर्तन्ती ज्योतिर्गणनिषेविता। ताराकोटिसहस्राणां नभसश्च समायता ॥ ४
माहेन्द्रेण गजेन्द्रेण आकाशपथयायिना। क्रीडिता ह्यन्तरतले या सा विक्षोभितोदका ॥ ५

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. ग. ङ. पुस्तकेषु नास्ति।

---

१ घ ङ. 'विविधैः चि'। २ क. 'ओघा म'। ३ ग. ङ. 'निश्चितः'।

(भुवनविन्यासः)

नैकैर्विमानसंघातैः प्रेक्षमाणैर्नभस्तलम्। सिद्धैरुपस्पृष्टजला महापुण्यजला शिवा ॥ ६
वायुना प्रेर्यमाणा च अनेकाभोगगामिनी। परिवर्तत्यहरहो य(ह्य)था सूर्यस्तथैव सा ॥ ७
चत्वार्यशीतिमतता योजनानां समन्ततः। वेगेन कुर्वती मेरुं सा प्रयाता प्रदक्षिणम् ॥ ८
विभिद्यमाना सलिलैस्तैजसेनानिलेन च। मेरोरुत्तरकूटेषु पतिताऽथ चतुर्ष्वपि ॥ ९
मेरुकूटतटान्तेभ्य उत्कृष्टेभ्यो निवर्तिता। विकीर्यमाणसलिला चतुर्धा संभृतोदका ॥ १०
षष्टियोजनसाहस्रं निरालम्बनमम्बरम्। निपपात महाभागा [*मेरोस्तस्य चतुर्दिशम् ॥ ११
सा चतुर्ष्वभितश्चैव महापादेषु शोभना। पुण्या मन्दरपूर्वेण पतिता हि महानदी ॥ १२
पूर्वेणांशेन देवानां सर्वसिद्धगणालयम्। सुवर्णचित्रकटकं नैकनिर्झरकन्दरम् ॥ १३
प्लावयन्ती सशैलेन्द्रं मन्दरं चारुकन्दरम्। वममतापन्नपनैरनेकैः स्फाटिकोदकैः ॥ १४
तथा चैत्ररथं रम्यं प्लावयन्ती प्रदक्षिणम्। प्रविष्टा ह्यम्बरनदी ह्यरुणोदसरोवरम् ॥ १५
अरुणोदान्निसृताऽथ शीतान्ते रम्यनिर्झरे। शैले सिद्धगणावासे निपपात सुगामिनी ॥ १६
सीता नाम महापुण्या नदीनां प्रवरा नदी। सा निकुञ्जनिरुद्धा तु अनेकाभोगगामिनी ॥ १७
शीतान्तशिखरात्तूर्णं मुकुञ्जे वरपर्वते। निपपात महाभागा तस्मादपि सुमञ्जसम् ॥ १८
तस्मान्माल्यवतं शैलं भावयन्ती वरापगा। वैकङ्कं समनुप्राप्ता वैकङ्कान्मणिपर्वतम् ॥
मणिपर्वतान्महाशैलमृषभं नैककन्दरम् ॥ १९
एवं शैलसहस्राणि दारयन्ती महानदी। पतिताऽथ महाशैले जठरे सिद्धसेविते ॥ २०
तस्मादपि महाशैलं देवकूटं तरङ्गिणी। तस्य कुक्षिसमुद्भ्रान्ता क्रमेण पृथिवीं गता ॥ २१
सैव स्थलीसहस्राणि शैलराजशतानि च। वनानि च विचित्राणि सरांसि विविधानि च ॥
प्लावयन्ती महाभागा] विस्फारेन्द्रवलोकदा। नदीसहस्रानुगता प्रवृत्ता च महानदी ॥ २३
भद्राश्वं समहाद्वीपं प्लावयन्ती वरापगा। प्रविष्टा ह्यर्णवं पूर्वे पूर्वे द्वीपे महानदी ॥ २४
दक्षिणेऽपि प्रपन्ना या शैलेन्द्रे गन्धमादने। विभैः प्रपातैर्विविधैर्नैकाविस्फालितोदका ॥ २५
तद्गन्धमादनवनं नन्दनं देवनन्दनम्। प्लावयन्ती महाभागा प्रयाता सा प्रदक्षिणम् ॥ २७
नाम्ना ह्यलकनन्देति सर्वलोकेषु विश्रुता। प्रविवेशोत्तरसरो मानसं देवमानसम् ॥ २७
मानसाच्छैलराजानं रम्यं त्रिशिखरं गता। त्रिकूटाच्छैलशिखरात्कलिङ्गशिखरं गता ॥ २८
कलिङ्गशिखरात्तूर्णं रुचकं निपपात सा। रुचकान्निषधं प्राप्ता ताम्राभं निषधादपि ॥ २९
ताम्राभशिखरात्तूर्णं गता श्वेतोदरं गिरिम्। तस्मात्सुमूलं शैलेन्द्रं वसुधारं च पर्वतम् ॥ ३०
हेमकूटं गता तस्माद्देवशृङ्गं ततो गता। तस्माद्गता महाशैलं ततश्चापि पिशाचकम् ॥ ३१
पिशाचकाच्छैलवरात्पञ्चकूटं गता पुनः। पञ्चकूटात्तु कैलासं देवावासं शिलोच्चयम् ॥ ३२
तस्य कुक्षिषु विभ्रान्ता नैककन्दरसानुषु। [+हिमवन्तनपनदी निपपाताचलोत्तमे ॥ ३३
एवं शैलसहस्राणि दारयन्ती महानदी।] स्थलीशतान्यनेकानि प्लावयन्त्याशुगामिनी ॥ ३४
वनानां च सहस्राणि कन्दराणां शतानि च। प्लावयन्ती महाभागा प्रयाता दक्षिणोदधिम् ॥

* धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति। + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति।

१ ङ. [illegible]। २ [illegible]। ३ घ. [illegible]। ४ घ. [illegible]। ५ घ. [illegible]।

रम्या योजनविस्तीर्णा शैलकुक्षिषु संवृता । या धृता देवदेवेन शंकरेण महात्मना ॥ ३६
पावनी द्विजशार्दूल घोराणामपि पाप्मनाम् । शंकरस्याङ्गसंस्पर्शान्महादेवस्य धीमतः ॥
द्विगुणं पवित्रसलिला सर्वलोके महानदी ॥ ३७
अनुशैलं समन्ताच्च निर्गता बहुभिर्मुखैः । अथोऽन्येनाभिधानेन ख्याता नद्यः सहस्रशः ॥ ३८
तस्माद्धिमवतो गङ्गा गता सा तु महानदी । एवं गङ्गेति नाम्नी हि प्रकाशा सिद्धसेविता ॥ ३९
धन्यास्ते सत्तमा देशा यत्र गङ्गा महानदी । रुद्रसाध्यानिलादित्यैर्जुष्टतोया यशोवती ॥ ४०
महापादं प्रवक्ष्यामि मेरोरपि हि पश्चिमम् । नानारत्नाकरं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥ ४१
विपुलं शैलराजानं विपुलोदरकन्दरम् । नितम्बकुञ्जकटकैर्विमलैर्मण्डितोदरम् ॥ ४२
अपि या त्र्यम्बकस्यैषा त्रिदशैः सेवितोदका । वायुवेगा गताभोगा ललंत्र भ्रामिना पुनः ॥ ४३
मेरुकूटतटाद्भ्रष्टा महतैः स्वादितोदका । विस्तीर्यमाणसलिला निर्मलांशुकसंनिभा ॥ ४४
तस्य कूटेऽम्बरनदी सिद्धचारणसेविता । प्रदक्षिणमथाऽऽहृत्य पतिता सानुगामिनी ॥ ४५
देवभ्राजं महाभ्राजं सर्वभ्राजं महावनम् । प्लावयन्ती महाभागा नानापुष्पफलोदका ॥ ४६
प्रदक्षिणं प्रकुर्वाणा नानावनविभूषिता । प्रविष्टा पश्चिमसरः सितोदं विमलोदकम् ॥ ४७
सा सितोदाद्विनिष्क्रान्ता सुपक्षं पर्वतं गता । सुपक्षतस्तु पुण्योदाचतो देवर्षिसेविता ॥ ४८
सुपक्षकूटतटगा तस्माच्च संदितोदका । निपपात महाभागा रमण्यं शिखिपर्वतम् ॥ ४९
शिखेश्च पर्वतोत्कङ्कं कङ्काद्वैदूर्यपर्वतम् । वैदूर्यात्कपिलं शैलं तस्माच्च गन्धमादनम् ॥ ५०
तस्माद्गिरिवरात्प्राप्ता पिञ्जरं वरपर्वतम् । पिञ्जरात्सरसं याता तस्माच्च कुमुदाचलम् ॥ ५१
मधुमन्तं जनं चैव मुकुटं च शिलोचयम् । मुकुटाच्छैलशिखरात्कृष्णं याता महागिरिम् ॥ ५२
कृष्णाच्छ्वेतं महाशैलं महानगनिषेवितम् । श्वेतात्सहस्रशिखरं शैलेन्द्रं पतिता पुनः ॥ ५३
अनेकाभिः स्रवन्तीभिराप्यायितजला शिवा । एवं शैलसहस्राणि सादयन्ती महानदी ॥
पारिजाते महाशैले निपपाताऽऽशुगामिनी ॥ ५४
अनेकनिर्झरनदी गुहासानुषु राजते । तस्य कुक्षिष्वनेकासु भ्रान्ततोया तरङ्गिणी ॥ ५५
व्याहन्यमानसंवेगा गण्डशैलैरनेकशः । संविध्यमानसलिला गता च धरणीतले ॥ ५६
केतुमालं महाद्वीपं नानाम्लेच्छगणैर्युतम् । प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवम् ॥ ५७
सुवर्णचित्रपार्श्वे तु सुपार्श्वेऽप्युत्तरे गिरौ । मेरोश्चित्रमहापादे महासंत्त्वनिषेविते ॥ ५८
मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका । अनेकाभोगवैकाद्री क्षिप्यमाणे नभस्तले ॥ ५९
षष्टियोजनसाहस्रे निरालम्बेऽम्बरे शुभे । विकीर्यमाणा मालेव निपपात महानदी ॥ ६०
एवं कूटतटभ्रष्टा नैकैर्देवर्षिसेवितैः । विकीर्यमाणसलिला नैकपुष्पोडुपोत्कचा ॥ ६१
नानारत्नवनोद्देशमरण्यं सवितुर्वनम् । महावनं महाभागा प्लावयन्ती प्रदक्षिणम् ॥ ६२
सरोवरं महापुण्यं महाभागनिषेवितम् । तत्राऽऽविवेश कल्याणी महाभद्रं सितोदका ॥ ६३

१ घ. °पु विस्तृता । २ ग. घ. °शोकम्° । ३ ख. ग. ङ. °नुशैल । ४ ङ. °अन्यान्ये° । ५ क. °स्तादित्र°। ख. °शा ये म° । ६ क. यरस्वती । ७ घ. ङ. °वेगगता° । ८ ग. °भोगङ्ग° । ९ ग. घ. क. °तेवनिल भ्रमेता । मे° । १० क. पा मु [illegible]° । ११ ङ. °दरा । सा । १२ घ. ङ. °तात्कङ्कं काकाद्वै° । १३ ग. घ °इनाग° । १४ ग. घ. ङ. प्रकाशी । १५ क. °नानान° । ग. ङ. °मानेन° । १६ क. °शिला । वि° । १७ ग. घ. ङ. °पोडुपेत्कचा । नानार° । १८ ग. ख. ङ. °दकम् । म° ।

भद्रसोमेति नाम्ना हि महापारा महाजवा । महानदी महापुण्या महाभद्रा विनिर्गता ॥ ६४
नैकनिर्झरवमाढ्या शङ्खकूटतटे तु सा । तत्र कूटे गिरितटे निपपाताऽऽशुगामिनी ॥ ६५
शङ्खकूटतटाद्भ्रष्टा पपात वृषपर्वतम् । वृषपर्वताद्धंसगिरिं नागशैलं ततो गता ॥ ६६
तस्मान्नीलं नगश्रेष्ठं संप्राप्ता वर्षपर्वतम् । नीलात्कापिञ्जलं चैव इन्द्रनीलं च निम्नगा ॥ ६७
ततः परं महानीलं हेमशृङ्गं च सा ययौ । हेमशृङ्गाद्गता श्वेतं श्वेताच्च सुनगं ययौ ६८
सुनगाच्छतशृङ्गं च संप्राप्ता सा महानदी । शतशृङ्गान्महाशैलं पुष्करं पुष्पमण्डितम् ॥ ६९
पुष्कराच्च महाशैलं द्विराजं सुमहाबलम् । वराहपर्वतं तस्मान्मयूरं च शिलोच्चयम् ॥ ७०
मयूराच्चैकशिखरं कन्दरोदरमण्डितम् । जातुधिं शैलशिखरं निपपाताऽऽशुगामिनी ॥ ७१
एवं गिरिसहस्राणि दारयन्ती महानदी । त्रिशृङ्गं शृङ्गकलिलं मर्यादापर्वतं गता ॥ ७२
त्रिशृङ्गतटविभ्रष्टा महाभागनिषेविता । मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका ॥ ७३
वीरुधं पर्वतवरं पपात विमलोदका । प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवम् ॥ ७४
सुवर्णभुवि पार्श्वे तु सुपार्श्वेऽप्युत्तरे गिरौ । मेरोश्चैव महापादे महासत्त्वनिषेविते ॥ ७५
कन्दरोदरविभ्रष्टा तस्मादपि तरङ्गिणी । नैकभोगा पपातोर्वीं चित्रपुष्पोडुपोत्कचा ॥ ७६
प्लावयन्ती प्रमुदिता उत्तरान्सा कुरूञ्शिवा । महाद्वीपस्य मध्येन प्रयाता सोत्तरार्णवम् ॥ ७७
एवं तास्तु महानद्यश्चतस्रो विमलोदकाः । महागिरितटभ्रष्टाः संप्रयाताश्चतुर्दिशम् ॥ ७८
तस्येयं कथितप्राया पृथिवी बहुविस्तरा । मेरुशैलमहाकीर्णाऽविशेषाच्च सर्वतोदिशम् ॥ ७९
चतुर्महाद्वीपवती चतुराक्रीडकानना । चतुष्केतुमहावृक्षा चतुर्वरसरस्वती ॥ ८०
चतुर्महाशैलवती चतुरोरगसंश्रया । अष्टोत्तरमहाशैला तथाऽष्टवरपर्वता ॥ ८१

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३८९

---

अथ त्रिचत्वारिंशोऽध्यायः ।

---

## भुवनविन्यासः ।

सूत उवाच—

गन्धमादनपार्श्वे तु स्फीता चोपरि गण्डिका । द्वात्रिंशतं सहस्राणि योजनैः पूर्वपश्चिमा ॥ १
अस्याऽऽयामश्चतुस्त्रिंशत्सहस्राणि प्रमाणतः । तत्र ते शुभकर्माणः केतुमालाः परिश्रुताः ॥ २
तत्र काला नराः सर्वे महासत्त्वा महाबलाः । स्त्रियश्चोत्पलपत्राभाः सर्वास्ताः प्रियदर्शनाः ॥ ३
तत्र दिव्यो महावृक्षः पनसः षड्रसाश्रयः । ईश्वरो ब्रह्मणः पुत्रः कामचारी मनोजवः ॥
तस्य पीत्वा फलरसं जीवन्ति हि समायुतम् ॥ ४
पार्श्वे माल्यवतश्चापि पूर्वे पूर्वा तु गण्डिका । आयामतोऽथ विस्तारायथैवापरगण्डिका ॥ ५

---

१ घ. ङ. जारुधिं । २ क. ग. °का । विरद्ध पं° । ङ. °का । वीरद्ध पं° । ३ घ. ङ °वर्णे सु° । ४ ग. घ. °कुवोत्कच । प्ला° । ङ. °दुवोत्कटा प्ला° । ५ ग. विवृत्यास° । घ विरज्यास° । ङ. विमृश्यास° । ६ ग. घ. ङ. सरोवती । ७ ङ. °त्यश्तथा° । ८ ङ. °केता. । ३° । ९ ग घ. ङ. °न्ति वै वर्षायु° ।

रम्या योजनविस्तीर्णा शैलकुक्षिषु संवृता । या धृता देवदेवेन शंकरेण महात्मना ॥ ३६
पावनी द्विजशार्दूल घोराणामपि पाप्मनाम् । शंकरस्याङ्गसंस्पर्शान्महादेवस्य धीमतः ॥
द्विगुणं पवित्रसलिला सर्वलोके महानदी ॥ ३७
अनुशैलं समन्ताच्च निर्गता बहुभिर्मुखैः । अथोऽन्येनाभिधानेन ख्याता नद्यः सहस्रशः ॥ ३८
तस्माद्धिमवतो गङ्गा गता सा तु महानदी । एवं गङ्गेति नाम्नी हि प्रकाशा सिद्धसेविता ॥ ३९
धन्यास्ते सत्तमा देशा यत्र गङ्गा महानदी । रुद्रसाध्यानिलादित्यैर्जुष्टतोया यशोवती ॥ ४०
महापादं प्रवक्ष्यामि मेरोरपि हि पश्चिमम् । नानारत्नाकरं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥ ४१
विपुलं शैलराजानं विपुलोदरकन्दरम् । नितम्बकुञ्जकटकैर्विमलैर्मण्डितोदरम् ॥ ४२
अपि या त्र्यम्बकस्यैषा त्रिदशैः सेवितोदका । वायुवेगा गताभोगा लतेव भ्रामिता पुनः ॥ ४३
मेरुकूटतटाद्भ्रष्टा महत्तैः स्वादितोदका । विस्तीर्यमाणसलिला निर्मलांशुकसंनिभा ॥ ४४
तस्य कूटेऽम्बरनदी सिद्धचारणसेविता । प्रदक्षिणमथाऽऽवृत्य पतिता सानुगामिनी ॥ ४५
देवभ्राजं महाभ्राजं सर्वभ्राजं महावनम् । प्लावयन्ती महाभागा नानापुष्पफलोदका ॥ ४६
प्रदक्षिणं प्रकुर्वाणा नानावनविभूषिता । प्रविष्टा पश्चिमसरः सितोदं विमलोदकम् ॥ ४७
सा सितोदाद्विनिष्क्रान्ता सुपक्षं पर्वतं गता । सुपक्षतस्तु पुण्योदात्ततो देवर्षिसेविता ॥ ४८
सुपक्षकूटतटगा तस्माच्च संशितोदका । निपपात महाभागा रमण्यं शिखिपर्वतम् ॥ ४९
शिखेश्च पर्वतोत्कङ्कं कङ्काद्वैदूर्यपर्वतम् । वैदूर्यात्कपिलं शैलं तस्माच्च गन्धमादनम् ॥ ५०
तस्माद्गिरिवरात्प्राप्ता पिञ्जरं वरपर्वतम् । पिञ्जरात्सरसं याता तस्माच्च कुमुदाचलम् ॥ ५१
मधुमन्तं जनं चैव मुकुटं च शिलोच्चयम् । मुकुटाच्छैलशिखरात्कृष्णं याता महागिरिम् ॥ ५२
कृष्णाच्छ्वेतं महाशैलं महानागनिषेवितम् । श्वेतात्सहस्रशिखरं शैलेन्द्रं पतिता पुनः ॥ ५३
अनेकाभिः स्रवन्तीभिराप्यायितजला शिवा । एवं शैलसहस्राणि सादयन्ती महानदी ॥
पारिजाते महाशैले निपपाताऽऽशुगामिनी ॥ ५४
अनेकनिर्झरनदी गुहासानुषु राजते । तस्य कुक्षिष्वनेकासु भ्रान्ततोया तरङ्गिणी ॥ ५५
व्याहन्यमानसंवेगा गण्डशैलैरनेकशः । संविघ्यमानसलिला गता च धरणीतले ॥ ५६
केतुमालं महाद्वीपं नानाम्लेच्छगणैर्युतम् । प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवम् ॥ ५७
सुवर्णचित्रपार्श्वे तु सुपार्श्वेऽप्युत्तरे गिरौ । मेरोश्चित्रमहापादे महासत्त्वनिषेविते ॥ ५८
मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका । अनेकाभोगवक्राङ्गी क्षिप्यमाणे नभस्तले ॥ ५९
षष्टियोजनसाहस्रे निरालम्बेऽम्बरे शुभे । विकीर्यमाणा मालेव निपपात महानदी ॥ ६०
एवं कूटतटैर्भ्रष्टा नैकैर्देवर्षिसेवितैः । विकीर्यमाणसलिला नैकपुष्पोडुपोत्कचा ॥ ६१
नानारत्नवनोद्देशमरण्यं सवितुर्वनम् । महावनं महाभागा प्लावयन्ती प्रदक्षिणम् ॥ ६२
सरोवरं महापुण्यं महाभागनिषेवितम् । तत्राऽऽविवेश कल्याणी महाभद्रं सितोदका ॥ ६३

१ घ. °षु विस्तृता । २ ग. घ. °रोत्तम° । ३ क. ग. ट. °नुशील । ४ ड. °अन्यान्ये° । ५ क °म्नादित्र°। ख. °भ्रा वै भ° । ६ क. यशस्वती । ७ घ. ङ. °वेगगता° । ८ ग. °भोगल° । ९ ग. घ. ङ. °तेवनिल°भ्रामिता । मे° । १० क. सा तु गा° । ११ ङ. °दका । सा । १२ घ. ड. °तात्काक काकाद्वै° । १३ ग. घ °ह्वानाग° । १४ ग. घ. ङ. °वक्राङ्गी । १५ क. °मानान° । ग. ङ. °माने न° । १६ ङ. °विता । वि° ।१७ ग. घ. ङ. °प्पोडुमेखला । नानार° । १८ ग. घ ङ. °दकम् । म° ।

( भुवनविन्यासः )

समृद्धराष्ट्रं स्फीतं च नानाजनपदाकुलम् । नानावृक्षवनोद्देशं नानानगसुवेष्टितम् ॥ १३
नरनारीगणाकीर्णं नित्यं प्रमुदितं शिवम् । बहुधान्यधनोपेतं नानानृपतिपालितम् ॥
उपेतं कीर्तनशतैर्नानारत्नाकराकरम् ॥ १४
तस्मिन्देशे समाख्याता हेमशङ्खदलप्रभाः । महाकाया महावीर्याः पुरुषाः पुरुषर्षभाः ॥ १५
संभाषणं दर्शनं च समस्थानोपसेवनम् । देवैः सह महाभागाः कुर्वते तत्र वै प्रजाः ॥ १६
दश वर्षसहस्राणि तेषामायुः प्रकीर्तितम् । धर्माधर्मविशेषश्च न तेष्वास्ति महात्मसु ॥
अहिंसा सत्यवाक्यं च प्रकृत्यैव हि वर्तते ॥ १७
ते भवस्या शंकरं देवं गौरीं परमवर्णिनीम् । इज्यापूजानमस्कारांस्ताभ्यां नित्यं प्रयुञ्जते ॥१८

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२१

---

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

सूत उवाच—

निसर्ग एष विख्यातो भद्राश्वानां यथार्थवत् । शृणुध्वं केतुमालानां विस्तरेण प्रकीर्तनम् ॥ १
निषधस्याचलेन्द्रस्य पश्चिमस्य महात्मनः । पश्चिमेन हि यत्तत्र दिक्षु सर्वासु कीर्तितम् ॥ २
कुलाचलानां सप्तानां नदीनां च विशेषतः । तथा जनपदानां च विस्तरं श्रोतुमर्हथ ॥ ३
विशालः कम्बलः कृष्णो जयन्तो हरिपर्वतः । *अशोको वर्धमानश्च सप्तैते कुलपर्वताः ॥ ४
तेषां प्रसूतिरन्येऽपि पर्वता बहुविस्तराः । कोटिकोटिशता ज्ञेयाः शतशोऽथ सहस्रशः ॥ ५
तैर्विमिश्रा जनपदा नानाजातिसमाकुलाः । नानाप्रकारविशेषास्त्वनेकनृपपालिताः ॥ ६
ते नामधेयैर्विख्याता विविधाः प्रथिता भुवि । अध्यासिता जनपदैः कीर्तनैश्च विभूषिताः ॥ ७
[+ तेषां सनामधेयानि राष्ट्राणि विविधानि च । गिर्यन्तरनिविष्टानि समेषु विषमेषु च ॥ ८
यथेह कथिताः पौरा गोमन्तुष्यकपोतकाः ] । तस्मुसो भ्रमरा यूथा माहेयाचलकूटकाः ॥ ९
सुमौलाः स्तावकाः क्रौञ्चाः कृष्णाङ्गमणिपुञ्जकाः । शुक्लकम्बलमौलीयाः समुद्रान्तरकास्तथा ॥
करम्भत्राः कुचाः श्वेताः सुवर्णकटकाः शुभाः । श्वेताङ्गाः कृष्णपादाश्च विहाः कपिलकर्णिकाः
अल्पाकरालगोज्वाला हीनानो वनपातकाः । महिषाः कुमुदाभाश्च करपाटाः सहोत्कचाः ॥
शुनकाता मरानासा वनासगजभूमिकाः । करञ्जपञ्जमा वाहाः किष्किन्धपाण्डुभूमिकाः ॥ १३
कुबेरा धूमजा अङ्गा वङ्गा राजीवकोकिलाः । नानाङ्गाश्च महाङ्गाश्च मयौरेयाः सुरेचकाः ॥ १४

* इदमर्धं नास्ति ग. पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति ।

१ ग. घ. ङ. °नरपत्तनम् । २ ग. घ. ङ. °र्वा यज्ञपर्वत° । ३ घ. ङ. कोटि । ४ घ. ङ. °कुमुदाः क° । ५ ङ. °मा प्राप्त° । ६ ङ. °नियुक्त° । ७ घ. ङ. दृश्यन्ते । ८ ग. घ. ङ. °देशाः° । ९ ग. विहा. क° । घ. विहाः । ङ. विहाः क° । १० ग. घ. °का । उत्ता° । ङ. °का । उत्ता° । ११ ग. घ. ङ. °नासा° । १२ घ. पुष्कला । १३ घ. अङ्गा ।

भद्राश्वास्तत्र विज्ञेया नित्यं मुदितमानसाः । भद्रं सालवनं तत्र कालाम्राश्च महाद्रुमाः ॥ ६
तत्र ते पुरुषाः श्वेता महासत्त्वा महाबलाः । स्त्रियः कुमुदवर्णाभाः सुन्दर्यः प्रियदर्शनाः ७
चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः । चन्द्रशीतलगात्र्यश्च स्त्रियश्चोत्पलगन्धिकाः ॥ ८
दश वर्षसहस्राणि तेषामायुर्निरामयम् । कालाम्रस्य रसं पीत्वा सर्वदा स्थिरयौवनाः ॥ ९

ऋषय ऊचुः—

प्रमाणं वर्णमायुश्च याथातथ्येन कीर्तितम् । चतुर्णामपि द्वीपानां समासान्न तु विस्तरात् ॥ १०

सूत उवाच—

भद्राश्वानां यथा चिह्नं कीर्तितं कीर्तिवर्धनाः । तच्छृणुध्वं तु कार्त्स्न्येन पूर्वसिद्धैरुदाहृतम् ॥ ११
देवकूटस्य सर्वस्य प्रथितस्येह यत्परम् । पूर्वेण दिक्षु सर्वासु यथावच्च प्रकीर्तितम् ॥ १२
कुलाचलानां पञ्चानां नदीनां च विशेषतः । तथा जनपदानां च यथादृष्टं यथाश्रुतम् ॥ १३
शैवालो वर्णमालाग्रः कोरञ्जश्चाचलोत्तमः । श्वेतवर्णश्च नीलश्च पञ्चैते कुलपर्वताः ॥ १४
तेषां प्रसूतिरन्येऽपि पर्वता बहुविस्तराः । कोटिकोटिः क्षितौ ज्ञेयाः शतशोऽथ सहस्रशः ॥ १५
तैर्विमिश्रा जनपदैर्नानासरःसमाकुलाः । नानाप्रकारजातीयास्त्वनेकनृपपालिताः ॥ १६
नामधेयैश्च विक्रान्तैः श्रीमद्भिः पुरुषर्षभैः । अध्यासिता जनपदाः कीर्तनीयाश्च शोभिताः ॥
तेषां तु नामधेयानि राष्ट्राणि विविधानि च । गिर्यन्तरनिविष्टानि समेषु विषमेषु च ॥ १८
तथा सुमङ्गलाः शुद्धाश्चन्द्रकान्ताः सुनन्दनाः । व्रजका नीलमौलेयाः सौवीरा विजयस्थलाः ॥
महास्थलाः सुकामाश्च महाकेशाः सुमूर्धजाः । वातरंहाः सोपसङ्गाः परिवायाः पराचकाः ॥२०
संभवबला महानेत्राः शैवालास्तनपास्तथा । कुमुदाः शाकमुण्डाश्च उरःसंकीर्णभौमकाः ॥ २१
मोदका वत्सकाश्चैका वारीहा हारवामकाः । शङ्खाख्या भाविचन्द्राश्च उत्तरा हैमभौमकाः ॥
कृष्णभौमाः सुभौमाश्च महाभौमाश्च कीर्तिताः । एते चान्ये च विख्याता नानाजनपदा मया ॥
ते पिबन्ति महापुण्यां महागङ्गां महानदीम् । आद्यां त्रैलोक्यविख्यातां शीतां शीताम्बुवाहिनीम् ॥
तथा च हंसवसतिर्महाचक्रा च निम्नगा । चक्रा वक्त्रा च कांची च सुरसा चापगोत्तमा ॥२५
शाखावती चेन्द्रनदी मेघा मङ्गारवाहिनी । कावेरी हरितोया च सोमावर्त्ता शतह्रदा ॥ २६
वनमाला वसुमती पम्पा पम्पावती शुभा । सुवर्णा पञ्चवर्णा च तथा पुण्या वपुष्मती ॥ २७
मणिवप्रा सुवप्रा च ब्रह्मभागा शिलाशिनी । कृष्णतोया च पुण्योदा तथा नागपदी शुभा ॥
शैवालिनी मणितटा क्षीरोदा वारुणावती । तथा विष्णुपदी चैव महापुण्या महानदी ॥ २९
हिरण्यवाहिनीला च स्कन्दमाला सुरावती । वामोदा च पताका च वेताली च महानदी ॥
एता गङ्गा महानद्यो नायिकाः परिकीर्तिताः । क्षुद्रनद्यस्त्वसंख्याताः शतशोऽथ सहस्रशः ॥३१
पूर्वद्वीपस्य वाहिन्यः पुण्यवत्यश्च कीर्तिताः । कीर्तनेनापि चैतासां पुनः स्यादिति मे मतिः ॥

---

१ ग. भद्रगा॰ । क. भद्रशाल॰ । २ ग. ङ. ॰लाम्रश्च महाद्रुमः । त॰ । ३ ग. घ. ङ. महो रात्रा म॰ । ४ क. ॰ताम्राश्च । ५ ङ. ॰मासं न तु । ६ ख. ङ. ॰म् । शैवा॰ । ७ क. ॰लाधा कोरजाश्चचलोत्तमाः । श्वे॰ । ८ घ. ङ. ॰पन्ना गारस॰ । ९ ग. घ. ङ. ॰न्ता शतन्दनाः । व॰ । १० ङ. ॰त्सौठे॰ । ११ घ. ॰मूकजाः । १२ घ. ङ. ॰तरंहा. सो॰ । १३ ङ. सायव सं॰ । १४ ग. घ. ॰हा हरिया॰ । १५ ङ. ॰वाह हरिया॰ । १६ ग. ङ- कृष्णा भौ॰ । १७ ङ कृष्णी॰ । १८ ग. ङ. ॰सी वे॰द॰ । १९ घ. ङ. मोदा । २० घ. क्षीरोदा । २१ ग. ङ. वे ॰पद्मा पे॰ ।

• ( भुवनविन्यासः )

समृद्धराष्ट्रं स्फीतं च नानाजनपदाकुलम् । नानावृक्षवनोद्देशं नानानगरसुवेष्टितम् ॥ १३
नरनारीगणाकीर्णं नित्यं प्रमुदितं शिवम् । बहुधान्यधनोपेतं नानानृपतिपालितम् ॥
उपेतं कीर्तनशतैर्नानारत्नाकराकरम् ॥ १४
तस्मिन्देशे समाख्याता हेमशङ्खदलप्रभाः । महाकाया महावीर्याः पुरुषाः पुरुषर्षभाः ॥ १५
संभाषणं दर्शनं च समस्थानोपसेवनम् । देवैः सह महाभागाः कुर्वते तत्र वै प्रजाः ॥ १६
दश वर्षसहस्राणि तेषामायुः प्रकीर्तितम् । धर्माधर्मविशेषश्च न तेष्वस्ति महात्मसु ॥
अहिंसा सत्यवाक्यं च प्रकृत्यैव हि वर्तते ॥ १७
ते भक्त्या शंकरं देवं गौरीं परमवैष्णवीम् । इज्यापूजानमस्कारांस्ताभ्यां नित्यं प्रयुञ्जते ॥१८

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२१

---

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

सूत उवाच—

निसर्ग एष विख्यातो भद्राश्वानां यथार्थवत् । शृणुध्वं केतुमालानां विस्तरेण प्रकीर्तनम् ॥ १
निषधस्याचलेन्द्रस्य पश्चिमस्य महात्मनः । पश्चिमेन हि यत्तत्र दिक्षु सर्वासु कीर्तितम् ॥ २
कुलाचलानां सप्तानां नदीनां च विशेषतः । तथा जनपदानां च विस्तरं श्रोतुमर्हथ ॥ ३
विशालः कम्बलः कृष्णो जयन्तो हरिपर्वतः । *अशोको वर्धमानश्च सप्तैते कुलपर्वताः ॥ ४
तेषां प्रसूतिरन्येऽपि पर्वता बहुविस्तराः । कोटिकोटिशता ज्ञेयाः शतशोऽथ सहस्रशः ॥ ५
तैर्विमिश्रा जनपदा नानाजातिसमाकुलाः । नानाप्रकारविशेषास्त्वनेकनृपपालिताः ॥ ६
ते नामधेयैर्विक्रान्ता विविधाः प्रथिता भुवि । अध्यासिता जनपदैः कीर्तनैश्च विभूषिताः ॥ ७
[+ तेषां सनामधेयानि राष्ट्राणि विविधानि च । गिर्यन्तरनिविष्टानि समेषु विषमेषु च ॥ ८
यथेह कथिताः पौरा गोमनुष्यकपोतकाः ] । तस्मुखा भ्रमरा यूथा माहेयाचकश्टकाः ॥ ९
सुपीलाः स्तावकाः क्रौञ्चाः कृष्णाङ्गमणिपुञ्जकाः । शूटकम्बलमौपीयाः समुद्रान्तरकास्तथा ॥
करम्भवाः कुचाः श्वेताः सुवर्णकटकाः शुभाः । श्वेताङ्गाः कृष्णपादाश्च विहाः कपिलकर्णिकाः
अल्पाकरालगाग्नालाः हीनानौ वनपातकाः । महिषाः कुमुदाभाश्च करपाटाः सहोत्कचाः ॥
शुनकाशा महानासा वनासगजभूमिकाः । करञ्जमञ्जमा वाहाः किष्किण्डीपाण्डुभूमिकाः ॥ १३
कुबेरा धूमजा जङ्गा वङ्गा राजीवकोकिलाः । वाचाङ्गाश्च महाङ्गाश्च मधौरेयाः सुरेचकाः ॥ १४

* इदमर्धं नास्ति ग पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति ।

१ ग. घ ङ. °नरपत्तनम् । २ ग, घ. ङ. °ते धनमक्त्या° । ३ घ. ङ. गौरा ४ घ. ङ. °भुवाः क° । ५ ङ. °श्चा भ्राम° । ६ ङ. °निपुक° । ७ घ. ङ इवेना. । ८ ग घ ङ. °कंटट° । ९ ग. विहा क° । घ. विन्हा. । ङ. विन्हः क° । १० ग घ. °ला. । उत्ता° । ङ. °ला । उत्पात° । ११ ग. घ. ङ. °नासान° । १२ घ कुबेराः । १३ घ. जङ्गा ।

पिंत्तलाः काचलाश्चैव श्रवणा मत्तकासिकाः । गोदावा वकुला वाङ्गा वङ्कामोदकाः कलाः ॥
ते पिबन्ति महाभागाः प्रथमां तु महानदीम् । सुवर्मां पुण्यसलिलां महानागनिषेविताम् ॥ १९
कम्बलां तामसीं श्यामां सुमेधां बकुलां नदीम् । विकीर्णां शिखिमालां च तथा दर्भावतीमपि ॥
भद्रानदीं शुकनदीं पलाशां च महानदीम् । भीमां प्रभञ्जनां काञ्चीं पुण्यां चैव कुशावतीम् ॥
दक्षां शाकवतीं चैव पुण्योदां च महानदीम् । (*चन्द्रावतीं सुमूलां च ऋषभां चाऽऽपगोत्तमाम्
नदीं समुद्रमालां च तथा चम्पावतीमपि । एकाक्षां पुष्कलां वाह्नां सुवर्णा.नन्दिनीमपि ॥ २०
कालिन्दीं चैव पुण्योदां भारतीं च महानदीम् । सीतोदापातिकां ब्राह्मीं विशालां च महानदीम्)
पीवरीं कुम्भकारीं च रुषां चैवापगोत्तमाम् । महिषीं मानुषीं दण्डां तथा नदनदीं शुभाम् ॥२२
एताश्चान्याश्च पीयन्ते बहुशो हि सरितोत्तमाः+। देवर्षिसिद्धचरिताः पुण्योदाः पापहाः शुभाः॥
नानाजनपदास्फीतं महोपगाविभूषितम् । नानारत्नौघसंपूर्णं नित्यं प्रमुदितं शिवम् ॥ २४
उदीर्णं धनधान्याढ्यैर्नरवासैः समन्ततः । संनिविष्टं महाद्वीपं पश्चिमं सुकृतात्मनाम् ॥
निसर्गः केतुमालानामेष वः परिकीर्तितः ॥ २५

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२३८

---

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

शांशपायन उवाच—

पूर्वापरौ समाख्यातौ द्वौ देशौ नरस्त्वया प्रभो । उत्तराणां च वर्षाणां दक्षिणानां च सर्वशः ॥
आचक्ष्व नो यथातथ्यं ये च पर्वतवासिनः ॥ १

सूत उवाच—

दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु । वर्षं रमणकं नाम जायन्ते तत्र मानवाः॥ २
सर्वर्तुकामदाः सत्त्वा जरादुर्गन्धवर्जिताः । शुक्लाभिजनसंपन्नाः सर्वे च प्रियदर्शनाः ३
तत्रापि सुमहान्दिव्यो न्यग्रोधो रोहिणो महान् । तस्य पीत्वा फलरसं पिबन्तो वर्तयन्त्युत ॥
दश वर्षसहस्राणि शतानि दश पञ्च च । जीवन्ति ते महाभागाः सदा हृष्टा नरोत्तमाः ॥ ५
उत्तरेण तु श्वेतस्य शृङ्गसाह्वस्य दक्षिणे । वर्षं हिरण्वतं नाम यत्र हैरण्वती नदी ॥ ६
महाबलाः सुतेजस्का जायन्ते तत्र मानवाः । सर्वर्तुकामदाः सत्त्वा धनिनः प्रियदर्शनाः ॥ ७
एकादश सहस्राणि वर्षाणां तेऽमितौजसः । आयुष्प्रमाणं जीवन्ति शतानि दश पञ्च च ॥ ८
तस्मिन्वर्षे महाह्रसो लकुचः पद्मनाश्रयः । तस्य पीत्वा फलरसं तत्र जीवन्ति मानवाः ॥ ९
त्रीणि शृङ्गवतः शृङ्गाण्युच्छ्रितानि महान्ति च । एकं मणिमयं तेषामेकं चैव हिरण्मयम् ॥
सर्वरत्नमयं चैकं भवनैरुपशोभितम् ॥ १०

---

* धनुश्चिह्नान्तर्गतग्रन्थो ध. पुस्तके नास्ति । + आर्षोऽयं पाठः ।

१ ग. ङ. °त्तनाः का° । २ घ. °सवासि° । ३ ग. ङ. सुवर्मां पु° । ४ ग. ङ. भद्रां च । ५ घ. °दाश्मरि° ।
ङ. °दाभानाभे° । ६ क. ग. °न्यादैन° । ७ घ. वैशंपायन ।

(भुवनविन्यासः)

उत्तरस्य समुद्रस्य समुद्रान्ते च दक्षिणे । कुरवस्तत्र तद्वर्षं पुण्यं सिद्धनिषेवितम् ॥ ११
तत्र वृक्षा मधुफला नित्यं पुष्पफलोपगाः । वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ १२
सर्वकामफलास्तत्र केचिद्वृक्षा मनोरमाः । गन्धवर्णरसोपेतं प्रक्षरन्ति मधूत्तमम् ॥ १३
अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः । ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमम् ॥ १४
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । सर्वतः सुखसंस्पर्शा निष्पङ्का नीरजा शुभा ॥ १५
देवलोकाच्च्युतास्तत्र जायन्ते मानवाः शुभाः । शुक्लाभिजनसंपन्नाः सर्वे च स्थिरयौवनाः ॥ १६
मिथुनानि प्रसूयन्ते स्त्रियश्चातिमनोहराः । ते च तं क्षीरिणं वृक्षं पिबन्ति ह्यमृतोपमम् ॥ १७
मिथुनं जायते सद्यः समं चैव विवर्धते । समं शीलं च रूपं च म्रियन्ते चैव ते समम् ॥ १८
अन्योन्यमनुरक्ताश्च चक्रवाकसधर्मिणः । अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः ॥ १९
त्रयोदश सहस्राणि शतानि दश पञ्च च । जीवन्ति ते महावीर्या न चान्यस्त्रीनिषेविणः ॥ २०
कुरूणामपि चैतेषां शृणुध्वं विस्तरेण तु । जारुधेः शैलराजस्याप्युत्तरेणोत्तरस्य हि ॥
दिक्षु सर्वासु पद्मस्य कीर्त्यमानं निबोधत ॥ २१
अनेककन्दरदरीगुहानिर्झरमण्डितौ । नैककुञ्जवनोपेतौ चित्रधातुविभूषितौ ॥ २२
अनेकधातुकासिलौ सर्वधातुविभूषितौ । पुष्पमूलफलोपेतौ सिद्धचारणसेवितौ ॥ २३
द्वावप्येतौ सुमहान्तावुच्छ्रितौ कुलपर्वतौ । ताभ्यां कूटशतैर्नैकैस्तद्द्वीपमुपसेवितम् ॥ २४
चन्द्रकान्तश्च शैलश्च सूर्यकान्तश्च सानुमान् । तयोर्मध्येन सा याता भद्रसोमा महानदी ॥ २५
सहस्रशश्च नद्योऽन्याः प्रसन्नसुरसोदकाः । पयोह्रदाः कुरूणां हि स्नानपानावगाहनैः ॥ २६
तथाऽन्याः क्षीरवाहिन्यो महानद्यः सहस्रशः । मधुमैरेयवाहिन्यो घृतवाहिन्य एव च ॥ २७
दध्नः शतह्रदाश्चान्यास्ततः स्वाद्वन्नपर्वताः । अमृतस्वादुकल्पानि फलानि विविधानि च ॥ २८
गन्धवर्णरसाढ्यानि मूलानि च फलानि च । पञ्चयोजनमानानि महागन्धानि सर्वशः ॥ २९
नानावर्णप्रकाराणि पुष्पाणि च सहस्रशः । उपभोगसहस्राणि भद्राणि च महान्ति च ॥ ३०
गन्धवर्णरसाढ्यानि स्पर्शोपेतानि सर्वशः । तमालागुरुगन्धानां चन्दनानां वनानि च ॥ ३१
भ्रमरैरुपगीतानि प्रफुल्लानि सदैव च । वृक्षगुल्मलताढ्यानि वनानि सुसुखानि च ॥ ३२
षट्पदैरुपगीतानि द्विजैश्चान्यैर्द्विजोत्तमाः । पद्मोत्पलवनाढ्यानि सरांसि च सहस्रशः ॥ ३३
भक्ष्यमाल्यसमृद्धाश्च बहुमाल्यानुलेपनाः । मनोहरसुखैश्चित्रैः पक्षिसंघैर्निकूजिताः ॥ ३४
शयनासनोपभोगाश्च अनेकगुणविस्तराः । विहारभूमयो रम्याः सर्वर्तुषु सुखप्रदाः ॥ ३५
आक्रीडाः सर्वतः स्फीता मणिहेमपरिष्कृताः । शिलागृहा वृक्षगृहा वरेण्याः कदलीगृहाः ॥ ३६
लतागृहसहस्राणि सुसुखानि समन्ततः । शुद्धशङ्खदलाभानि भूमिवेश्मशतानि च ॥ ३७
तपनीयगवाक्षाणि मणिजालान्तराणि च । सुवर्णमणिचित्राणि सर्वत्र विपुलानि च ॥ ३८
महावृक्षसहस्राणि वरेण्यानि च सर्वशः । नानाकाराणि वासांसि सूक्ष्माणि सुसुखानि च ॥
मृदङ्गवेणुपणववीणाद्या बहुविस्तराः । फलन्ति कल्पवृक्षाणां सहस्राणि शतानि च ॥ ४०

---

१ क. °न कार्ये° । २ ङ. °णयनोरो° । ३ ङ. °सोत्पद्दि । ४ ग. घ. ङ. °ग्रन्थानि° । ५ क. ग. °वंत । भ° ६ घ. ङ. °नद्यानि । ७ घ. ङ. °समर्थानि भ° । ८ ग. घ. ङ. °मुग्धाद्यश्रेष्ठानेषु° । ९ घ. ङ. °रा रत्न° । १० घ. ङ. °पुष्पा° । ११ ग. ङ. विपुलानि । १२ ग. घ. °नि रत्ना° ।

सर्वत्रैव तथोद्यानं सर्वत्रैव हि तत्पुरम् । सर्वद्वीपप्रमुदितं नरनारीसमाकुलम् ॥
प्रवाति चानिलस्तत्र नानापुष्पाधिवासितः ॥ ४१
नित्यमङ्गसुखाल्हादस्तस्मिन्द्वीपे श्रमापहे । तत्र स्वर्गपरिभ्रष्टा जायन्ते हि नराः सदा ॥
भौमं तदपि हि स्वर्गं तत्रापि च गुणोत्तमम् ॥ ४२
चन्द्रकान्ता नरवराः श्यामाङ्गाः पूर्वकूलजाः । श्यामावदाताः सुखिनः सूर्यकान्ता वराः प्रजाः
तस्मिन्देशे नराः श्रेष्ठा देवसत्त्वपराक्रमाः । सदा विहारिणः सर्वे कामवृत्त्या सुवर्चसः ॥ ४४
वलयाङ्गदकेयूरहारकुण्डलभूषिताः । स्रग्विणश्चित्रमुकुटाश्चित्राच्छादनवाससः ॥ ४५
अजीर्णयौवनधराः सुप्रियाः प्रियदर्शनाः । प्रजा वर्षसहस्राणि जीवन्ति सुबहून्युत ॥ ४६
न ताः प्रसवधर्मिण्यो न संशर्मक्षयो विधिः । मिथुनं जायते वृक्षादुपक्षमनीदृशम् ॥ ४७
सामान्यविभवाः सर्वे ममत्वपरिवर्जिताः । न तत्र विद्यते धर्मो नाधर्मः संप्रवर्तते ॥ ४८
न व्याधिर्न जरा तत्र न दुर्मेधा न च क्लमः । पूर्णे काले विनश्यन्ति जलबुद्बुदवच्च ते ॥ ४९
एवमत्यन्तसुखिनः सर्वदुःखविवर्जिताः । रक्ता धर्मं न पश्यन्ति दुःखाद्धर्मोऽभिजायते ॥ ५०
उत्तराणां कुरूणां तु पार्श्वे ज्ञेयं तु दक्षिणे । समुद्रमूर्मिमालाढ्यं नानास्वरविभूषितम् ॥ ५१
पञ्चयोजनसाहस्रमतिक्रम्य सुरालयम् । चन्द्रद्वीपमिति ख्यातं चन्द्रमण्डलसंस्थितम् ॥ ५२
सहस्रयोजनानां तु सर्वतःपरिमण्डलम् । नानापुष्पफलोपेतं समृद्ध्या परया युतम् ॥
शतयोजनविस्तीर्णमुच्छ्रितं तावदेव तु ॥ ५३
तस्य मध्ये गिरिवरः सिद्धचारणसेवितः । चन्द्रतुल्यप्रभैः कान्तैश्चन्द्राकारैः सुलक्षणैः ॥ ५४
श्वेतवैदूर्यकुमुदैश्चित्रोऽसौ कुमुदप्रभः । अनेकचित्रकोद्यानो नैकनिर्झरकन्दरः ॥
महासानुदरीकुञ्जैर्विविधैः समलंकृतः ॥ ५५
तस्माच्छैलान्महापुण्या चन्द्रांशुविमलोदका । प्रवहत्युत्तमनदी चन्द्रावर्ता तरङ्गिणी ॥ ५६
तत्र चन्द्रमसः स्थानं नक्षत्राधिपतेर्वरम् । सदाऽवतरते तत्र चन्द्रमा ग्रहनायकः ॥ ५७
तत्र चन्द्रमसो नाम्ना शैलः स तु परिश्रुतः । चन्द्रद्वीपं महाद्वीपं प्रकाशं दिवि चेह च ॥ ५८
तत्र चन्द्रप्रतीकाशाः पूर्णचन्द्रनिभाननाः । चन्द्रकान्ताः प्रजाः सर्वा विमलाश्चन्द्रदैवताः ॥ ५९
अत्यन्तधार्मिकाः सौम्याः सत्यसंधाः सुतेजसः । प्रजास्तत्र सदाचारा दशवर्षशतायुषः ६०
पश्चिमेन तु द्वीपस्य पश्चिमस्य प्रकीर्तितम् । चतुर्योजनसाहस्रं समतीत्य महोदधिम् ॥ ६१
दशयोजनसाहस्रं समन्तात्परिमण्डलम् । द्वीपं भद्राकरं नाम नानापुष्पोपशोभितम् ॥ ६२
प्रभूतधनधान्याढ्यमनेकनृपपालितम् । नित्यं प्रमुदितं स्फीतं महाशैलैश्च शोभितम् ॥ ६३
तत्र भद्रासनं वायोर्नानारत्नैश्च मण्डितम् । तत्र विग्रहवान्वायुः सदा पर्वसु पूज्यते ॥ ६४
तपनीयसुवर्णाभास्तपनीयविभूषिताः । विराजन्तेऽमरप्रख्यास्तत्र चित्राम्बरस्रजः ॥ ६५
वीर्यवन्तो महाभागाः पञ्चवर्षशतायुषः । सत्यसन्धा मुदा युक्ताः प्रजास्ता वायुदैवताः ६६

सूत उवाच—

एषमेव निसर्गोऽयं वर्षाणां भारते युगे । दृष्टः परमतत्त्वज्ञैर्भूयः किं कीर्तयामि ते ॥ ६७

---

१ ग. घ. ङ. °हलारी तस्मि° । २ ग. घ. ङ. शाङ्गाः पूर्वकूलजा । श्या° । ३ ग. घ. °स्मिन्द्वीपे न° । ४ ग. घ. °प्रसमीर्ये° । ५ ङ. °मनोद° । ६ ग ङ. °धर्मो न आ° । ७ ग ङ. °वैदूर्यमुक्ताचितोऽसौकुमुदप्रभे° । श्रा° । ८ ग. घ. [illegible] °नामतोर° । ९ ग. ङ. °नानास्° । १० ग. घ ङ. °मुदे° । ११ ग. ङ. °सन्मुग । आ° ।

(भुवनविन्यासः)

आख्याते त्वेवमृषयः सूतपुत्रेण धीमता । उत्तरश्रवणे भूयः पप्रच्छुस्तदनन्तरम् ॥ ६८

ऋषय ऊचुः—

यदिदं भारतं वर्षं यस्मिन्स्वायंभुवादयः । चतुर्दशैते मनवः प्रजासर्गे भवन्त्युत ॥ ६९
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम । एतच्छ्रुत्वा वचस्तेषामब्रवील्लोमहर्षणः ॥ ७०
पौराणिकस्तदा सूत ऋषीणां भावितात्मनाम् । एतद्विस्तरतो भूयस्तानुवाच समाहितः ७१

सूत उवाच—

निसर्ग एष विख्यातः कुरूणां तु यथार्थवत् । भारतस्य तु वक्ष्यामि निसर्गं तं निबोधत ॥ ७२
पुण्यतीर्थे हिमवतो दक्षिणस्याचलस्य हि । पूर्वपश्चायतस्यास्य दक्षिणेन द्विजोत्तमाः ॥ ७३
तथा जनपदानां च विस्तरं श्रोतुमर्हथ । अत्र वो वर्णयिष्यामि वर्षेऽस्मिन्भारते प्रजाः ॥ ७४
इदं तु मध्यमं चित्रं शुभाशुभफलोदयम् । उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत् ॥ ७५
वर्षं यद्भारतं नाम यत्रेयं भारती प्रजा । भरणाच्च प्रजानां वै मनुर्भरत उच्यते ॥
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ॥ ७६
ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ॥ ७७
भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः । समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥ ७८
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥ ७९
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम् ॥ ८०
आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै । तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ॥ ८१
द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु नित्यशः । पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः । इज्यायुद्धवणिज्याभिर्वर्तयन्तो व्यवस्थिताः ॥
तेषां संव्यवहारोऽयं वर्तते तु परस्परम् । धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ॥ ८४
संकल्पपञ्चमानां तु आश्रमाणां यथाविधि । इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी ॥ ८५
यस्त्वयं नवमो द्वीपस्तिर्यगायत उच्यते । कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ॥ ८६
अयं लोकस्तु वै सम्राडन्तरिक्षो विराट्स्मृतः । स्वराडन्यः स्मृतो लोकः पुनर्वक्ष्यामि विस्तरम्
सप्त चास्मिन्सुपर्वाणो विश्रुताः कुलपर्वताः । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥
विन्ध्यश्च पारियात्रश्च इत्येते कुलपर्वताः ॥ ८८
तेषां सहस्रशश्चान्ये पर्वतास्तु समीपगाः । अभिज्ञाताः सर्वगुणा विपुलाश्चित्रसानवः ॥ ८९
मन्दरः पर्वतश्रेष्ठो वैहारो दर्दुरस्तथा । कोलाहलःससुरसो मैनाको वैद्युतस्तथा ॥ ९०
पातंधमो नाम गिरिस्तथा पाण्डुरपर्वतः । गन्तुप्रस्थः कृष्णगिरिर्गोधनो गिरिरेव च ॥ ९१
पुष्पगिर्युज्जयन्तौ च शैलो रैवतकस्तथा । श्रीपर्वतश्च कारुश्च कूटशैलो गिरिस्तथा ॥ ९२
अन्ये तेभ्यः परिज्ञाता ह्रस्वाः स्वल्पोपजीविनः । तैर्विमिश्रा जनपदा आर्या म्लेच्छाश्च नित्यशः
पीयन्ते यैरिमा नद्यो गङ्गा सिन्धुसरस्वती । शतद्रुश्चन्द्रभागा च यमुना सरयूस्तथा ॥ ९४
इरावती वितस्ता च विपाशा देविका कुहूः । गोमती धूतपापा च बाहुदा च दृषद्वती ॥ ९५
कौशिकी च तृतीया तु निश्चीरा गण्डकी तथा । इक्षुर्लोहित इत्येता हिमवत्पादनिःसृताः ॥

---

१ घ. ङ. 'पुण्य वै' । २ घ. ङ. नेऽन्योऽन्य' । ३ घ. ङ. आर्या म्ले' । ४ ङ. 'आ ग' । ५ ङ. बहुदा ।

वेदस्मृतिर्वेदवती वृत्रघ्नी सिन्धुरेव च । वर्णाशा चन्दना चैव सतीरा महती तथा ॥ ९७
पेरा चर्मण्वती चैव विदिशा वेत्रवत्यपि । शिप्रा ह्यवन्ती च तथा पारियात्राश्रयाः स्मृताः ॥९८
शोणो महानदश्चैव नर्मदा सुमहाद्रुमा । मन्दाकिनी दशार्णा च चित्रकूटा तथैव च ॥ ९९
तमसा पिप्पला श्रोणी करतोया पिशाचिका । नीलोत्पला विपाशा च जम्बुला वालुवाहिनी
सितेरजा शुक्तिमती मकुणा त्रिदिवा क्रमात् । ऋक्षपादात्प्रसूतास्ता नद्यो मणिनिभोदकाः ॥
तापी पयोष्णी निर्विन्ध्या मद्रा च निषधा नदी । वेन्ना वैतरणी चैव शितिबाहुः कुमुद्वती ॥
तोया चैव महागौरी दुर्गा चान्तशिला तथा । विन्ध्यपादप्रसूताश्च नद्यः पुण्यजलाः शुभाः ॥
गोदावरी भीमरथी कृष्णा वेण्यथ वञ्जुला । तुङ्गभद्रा सुप्रयोगा कावेरी च तथाऽऽपगा ॥
दक्षिणापथनद्यस्तु सह्यपादाद्विनिःसृताः ॥ १०४
कृतमाला ताम्रपर्णी पुष्पजात्युत्पलावती । मलयाभिजातास्ता नद्यः सर्वाः शीतजलाः शुभाः
त्रिसामा ऋतुकुल्या च इक्षुला त्रिदिवा च या । लाङ्गूलिनी वंशधरा महेन्द्रतनयाः स्मृताः ॥
ऋषीका सुकुमारी च मन्दगा मन्दवाहिनी । कृपा पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः ॥
सर्वाः पुण्याः सरस्वत्याः सर्वा गङ्गाः समुद्रगाः । विश्वस्य मातरः सर्वा जगत्पापहराः स्मृताः
तासां नद्युपनद्योऽपि शतशोऽथ सहस्रशः । तास्विमे कुरुपाञ्चालाः शाल्वाश्चैव सजाङ्गलाः ॥
शूरसेना भद्रकारा बोधाः शतपथेश्वरैः । वत्साः किसष्णाः कुल्याश्च कुन्तलाः काशिकोशलाः
अथैपाश्च तिलङ्गाश्च मगधाश्च वृकैः सह । मध्यदेशा जनपदाः प्रायशोऽमी प्रकीर्तिताः ॥ १११
(*सह्यस्य चोत्तरार्धे तु यत्र गोदावरी नदी । पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥
[+तत्र गोवर्धनो नाम सुरराजेन निर्मितः) । रामप्रियार्थं स्वर्गोऽयं वृक्षा ओषधयस्तथा ॥
भरद्वाजेन मुनिना तत्प्रियार्थेऽवतारिताः । अन्तःपुरवनोद्देशस्तेन जज्ञे मनोरमः ] ॥ ११४
वाह्लीका वाटधानाश्च आभीराः कालतोयकाः । अपरान्ताश्च शूद्राश्च पह्लवाश्चर्मखण्डिकाः ॥११५
गान्धारा यवनाश्चैव सिन्धुसौवीरभद्रकाः । शका ह्रदाः कुलिन्दाश्च पारता हारपूरिकाः ॥
रमटा रुद्धकटका कैकया दशमानिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ॥ ११७
काम्बोजा दरदाश्चैव बर्बराः प्रियलौकिकाः । पीनाश्चैव तुषाराश्च पह्लवा बाह्यतोदराः ॥ ११८
आत्रेयाश्च भरद्वाजाः प्रस्थलाश्च कसेरुकाः । लम्पाकास्तनपाश्चैव पीडिका जुहुडैः सह ॥११९
अपगाश्चालिमद्राश्च किरातानां च जातयः । तोमरा हंसमार्गाश्च काश्मीरास्तङ्गणास्तथा ॥ १२०
चूलिकाश्चाहुकाश्चैव पूर्णदर्वास्तथैव च । एते देशा ह्युदीच्याश्च प्राच्यान्देशान्निबोधत ॥ १२१
अन्ध्रवाकाः सुजरका अन्तर्गिरिबहिर्गिराः । तथा प्रवङ्गवङ्गेया मालदा मालवर्तिनः ॥ १२२

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थो घ पुस्तके नास्ति ।

---

१ ग. घ ङ. कुशातीरा मही त° । २ घ. ङ पारा । ३ घ. ङ. क्षिप्रा । ४ घ ङ सुरहा° । ५ घ ङ °ला । निलोत्प° । ६ घ. ङ. °जा मुक्ति° । ७ घ. °सा । क्र° । ८ घ. निर्विन्ध्या । ९ घ. वेण्णा । १० घ. ङ. शिबिबा° । ११ क. °श्रवर्णी पु° । १२ घ. ङ. °नी । कृपा । १३ घ. ङ. °धाः सह्या° । १४ ग. किसष्टाः । ङ किरुज्याः । १५ क °र्ध पार्श्वेति° । १६ घ. °र्द्धे तु । १७ क. वाडधा° । १८ घ. ङ. पह्लवा° । १९ ग कुनिन्दा° । २० क. °सेरापाद° । २१ ङ. °शः । चीना° । २२ ङ. °कास्तानकाश्चै° । २३ ग. °नराश्चै° । घ. °नमार्श्चै° । २४ घ. ङ. शूलिका । २५ ङ. °धा बाहु° । २६ घ °वा मलदा मल्ल° । २७ ग. °ळवा म°न° ।

ब्रह्मोत्तराः प्रविजया भार्गवा गेयमर्थकाः । प्राग्ज्योतिषाश्च मुण्डाश्च विदेहास्ताम्रलिप्तकाः ॥
माल्ला मगधगोविन्दाः प्राच्यां जनपदाः स्मृताः ॥ १२३
अथापरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चौल्याः कुल्यास्तथैव च ॥१२४
सेतुका मूषिकाश्चैव कुमना वनवासिकाः । महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ॥ १२५
अ(आ)भीराः सहचैषीका आटव्याश्च वराश्च ये । पुलिन्दा विन्ध्यमूलीका वैदर्भा दण्डकैः सह
पौनिका मौनिकाश्चैव अस्मका भोगवर्धनाः । नैर्णिकाः कुन्तला अन्ध्रा उद्भिदा नलकालिकाः
दाक्षिणात्याश्च वै देशा अपरांस्तान्निबोधत । सूर्पाकाराः कोलवना दुर्गाः कालीतकैः सह ॥
पुलेयाश्च सुरालाश्च रूपसास्तापसैः सह । तथा तुरसिताश्चैव सर्वे चैव परक्षराः ॥ १२९
नासिक्याद्याश्च ये चान्ये ये वै चान्तरनर्मदाः । भानुकच्छाः समाहेयाः सहसा शाश्वतैरपि ॥
कच्छीयाश्च सुराष्ट्राश्च आनर्ताश्चार्बुदैः सह । इत्येते संपरीताश्च शृणुध्वं विन्ध्यवासिनः ॥ १३१
मालवाश्च करूपाश्च रोकलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥
तोसलाः कोसलाश्चैव त्रैपुरा वैदिकास्तथा । तुमुरास्तुम्बुराश्चैव पट्टुरा निषधैः सह ॥ १३३
अनूपास्तुण्डिकेराश्च वीतिहोत्रा ह्यवन्तयः । एते जनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः ॥ १३४
अतो देशान्प्रवक्ष्यामि पर्वताश्रयिणश्च ये । निगर्हरा हंसमार्गाः क्षुपणास्तङ्गणाः खसाः ॥ १३५
कुशप्रावरणाश्चैव हूणा दर्वाः सहूदकाः । त्रिगर्ता मालवाश्चैव किरातास्तामसैः सह ॥ १३६
चत्वारि भारते वर्षे युगानि कवयो विदुः । कृतं त्रेता द्वापरं च कलिश्चेति चतुष्टयम् ॥
तेषां निसर्गं वक्ष्यामि उपरिष्टान्निबोधत ॥ १३७

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

आदितः श्लोकानां समष्ट्यङ्काः—३३८९

अथ षट्चत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

(* सूत उवाच )

एतच्छ्रुत्वा तु ऋषय उत्तरं पुनरेव ते । शुश्रूषवो मुदा युक्ताः पप्रच्छुर्लोमहर्षणम् ॥ १

ऋषय ऊचुः—

यच्च किंपुरुषं वर्षं हरिवर्षं तथैव च । आचक्ष्व नो यथा तत्त्वं कीर्तितं भारतं त्वया ॥ २
पृष्टस्त्विदं यथा विप्रैर्यथाप्रश्नं विशेषतः । उवाच मुनिनिर्दिष्टं पुराणं विहितं यथा ॥ ३

सूत उवाच—

शुश्रूषा यत्र वो विप्रास्तच्छृणुध्वं मुदा युताः । प्लक्षखण्डः किंपुरुषे सुमहान्नन्दनोपमः ॥ ४

*इदं नास्ति ग. घ. ङ. पुस्तकेषु ।

१ घ. ङ. °रमितर्थ° । २ घ. ङ. °रस्करा । ३ ङ. नासिकाद्या° । ४ घ. °सिकाद्या° । ५ क. ये वैतान्त° । ६ घ. ङ. °भारुक । ७ क. °श्च अन° । ८ घ. °तैश्चपरान्ताश्च । ङ. °ते ह परान्ताश्च । ९ घ. ङ. °रा नैप° । १० घ. ङ. अपुरा° । ११ घ. °र्ताः कुलपास्त° । क. °र्ताःकुणपास्त° । १२ ग. ञसा । घ. ङ. स्वमा. । १३ घ ङ कुषप्रा° । १४ ङ. °र्वा. सुहूहुका. । १५ घ °हूहुका ।

आत्रेयः सुमतिर्धीमान्काश्यपो ह्यकृतव्रणः । भारद्वाजोऽग्निवर्चाश्च वशिष्ठो मित्रयुश्च यः ॥
सावर्णिः सौमदत्तिस्तु सुशर्मा शांशपायनः ॥ ५६
एते शिष्या मम ब्रह्मन्पुराणेषु दृढव्रताः । त्रिभिस्तिस्रः कृतास्तिस्रः संहिताः पुनरेव हि ॥
काश्यपः संहिताकर्ता सावर्णिः शांशपायनः । मामिका च चतुर्थी स्यात्सा चैषा पूर्वसंहिता ॥
सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचिकाः । पाठान्तरे पृथग्भूता वेदशाखा यथा तथा ॥
चतुःसाहस्रिकाः सर्वाः शांशपायनिकामृते ॥ ५९
लोमहर्षणिका मूलास्ततः काश्यपिकाः पराः । सावर्णिकास्तृतीयास्ता यजुर्वाक्यार्थपण्डिताः ॥
शांशपायनिकाश्चान्या नोदनार्थविभूषिताः । सहस्राणि ऋचामष्टौ षट्शतानि तथैव च ॥ ६१
एताः पञ्चदशान्याश्च दशान्या दशभिस्तथा । वालखिल्याः सहैषाः ससावर्णाः प्रकीर्तिताः ॥
अष्टौ साम सहस्राणि सामानि च चतुर्दश । आरण्यकं सहोमं च एतद्गायन्ति सामगाः ॥ ६३
द्वादशैव सहस्राणि छन्द आध्वर्यवं स्मृतम् । यजुषां ब्राह्मणानां च तथा व्यासो व्यकल्पयत् ॥
सग्राम्यारण्यकं तत्स्यात्समन्त्रकरणं तथा । अतः परं कथानां तु पूर्वा इति विशेषणम् ॥ ६५
ग्राम्यारण्यं समन्त्रं च ऋग्ब्राह्मणयजुः स्मृतम् । तथा हारिद्रवीयाणां खिलान्युपखिलानि च ॥
तथैव तैत्तिरीयाणां परक्षुद्रा इति स्मृतम् ॥ ६६
द्वे सहस्रे शतेन्यूने वेदे वाजसनेयके । ऋग्गणः परिसंख्यातो ब्राह्मणं तु चतुर्गुणम् ॥ ६७
अष्टौ सहस्राणि शतानि चाष्टावशीतिरन्यान्यधिकश्च पादः ॥
एतत्प्रमाणं यजुषामृचां च सशुक्रियं साखिलयाज्ञवल्क्यम् ॥ ६८
तथा चरणविद्यानां प्रमाणं संहितां शृणु । षट्साहस्रमृचामुक्तमृचः षड्विंशतिः पुनः ॥
एतावदधिकं तेषां यजुः कामं विवक्ष्यति ॥ ६९
एकादश सहस्राणि दश चान्या दशोत्तराः । ऋचां दश सहस्राणि अशीतिस्त्रिशतानि च ॥७०
सहस्रमेकं मन्त्राणामृचामुक्तं प्रमाणतः । एतावद्भृगुविस्तारमन्यच्चाथर्विकं बहु ॥ ७१
ऋचामथर्वणां पञ्च सहस्राणि विनिश्चयः । सहस्रमन्यद्विज्ञेयमृषिभिर्विंशतिं विना ॥ ७२
एतदङ्गिरसा प्रोक्तं तेषामारण्यकं पुनः । इति संख्या प्रसंख्याता शाखाभेदास्तथैव च ॥ ७३
कर्तारश्चैव शाखानां भेदे हेतुस्तथैव च । सर्वमन्वन्तरेष्वेवं शाखाभेदाः समाः स्मृताः ॥ ७४
प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे स्मृताः । अनित्यभावाद्देवानां मन्त्रोत्पत्तिः पुनः पुनः ॥
मन्वन्तराणां क्रियते सुराणां नामनिश्चयः । द्वापरेषु पुनर्भेदाः श्रुतीनां परिकीर्तिताः ॥ ७६
एवं वेदं तदा न्यस्य भगवानृषिसत्तमः । शिष्येभ्यश्च पुनर्दत्त्वा तपस्तप्तुं गतो वनम् ॥
तस्य शिष्यप्रशिष्यैस्तु शाखाभेदास्त्विमे कृताः ॥ ७७
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥ ७८
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः । अर्थशास्त्रं चैतेषां तु विद्यास्त्वष्टादशैव तु ॥ ७९

१ क. ग. ङ. °िः सोम° । २ ग. घ. ङ. °शायनः । ३ ग. ग. घ. ङ. °पिता र° । ४ ग. ग. घ. °धा तु तीया °स्पार्थपारगा° । ५ ङ °र्थे वि° । ६ क समर्थगा. र्ग° । ७ क. ग. यथा । ८ ग. ग. घ. ङ. °धाना प्र° । ९ क. °दशति । १० ग. ग. ङ. °साग ऋ° । ११ ग. घ. ङ. °तिशि° । १२ ग. °निदशानि । १३ ग. घ. °ता° ि शि° । १४ ख. ग. घ. ङ. °स्मृ ते° । १५ ग. घ. ङ. वेदे° । १६ क. ग. श्रुतानां । १७ ग. °तुर्थंतु वि° ।

( प्रजापतिवंशानुकीर्तनम् )

ज्ञेया ब्रह्मर्षयः पूर्वं,तेभ्यो देवर्षयः पुनः । राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः ॥
तेभ्य ऋषिप्रकृतयो मुनिभिः संशितव्रतैः ॥ ८०
कश्यपेषु वशिष्ठेषु तथा भृग्वङ्गिरोऽत्रिषु । पञ्चस्वेतेषु जायन्ते गोत्रेषु ब्रह्मवादिनः ॥
यस्मादृषन्ति ब्रह्माणं तेन ब्रह्मर्षयः स्मृताः ॥ ८१
धर्मस्याथ पुलस्त्यस्य क्रतोश्च पुलहस्य च । प्रत्यूषस्य प्रभासस्य कश्यपस्य तथा पुनः ॥ ८२
देवर्षयः सुतास्तेषां नामतस्तान्निबोधत । देवर्षी धर्मपुत्रौ तु नरनारायणावुभौ ॥ ८३
वालखिल्यः क्रतोः पुत्राः कर्दमः पुलहस्य तु । कुबेरश्चैव पौलस्त्यः प्रत्यूषस्याचलः स्मृतः ॥
पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ । ऋषन्ति देवान्यस्मात्ते तस्माद्देवर्षयः स्मृताः ॥ ८५
मानवे वैधये वंशे ऐडवंशे च ये नृपाः । ऐडा ऐक्ष्वाकनाभागा ज्ञेया राजर्षयस्तु ते ॥ ८६
ऋषन्ति रञ्जनाद्यस्मात्प्रजा राजर्षयस्ततः । ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयो मताः ॥ ८७
देवलोकप्रतिष्ठाश्च ज्ञेया देवर्षयः शुभाः । इन्द्रलोकप्रतिष्ठास्तु सर्वे राजर्षयो मताः ॥ ८८
अभिजात्या च तपसा मन्त्रव्याहरणैस्तथा । एवं ब्रह्मर्षयः प्रोक्ता दिव्या राजर्षयस्तु ये ॥ ८९
देवर्षयस्तथाऽन्ये च तेषां वक्ष्यामि लक्षणम् । भूतभव्यभवज्ञानं सत्याभिव्याहृतं तथा ॥ ९०
संबुद्धास्तु स्वयं ये तु संबद्धा ये च वै स्वयम् । तपसेह प्रसिद्धा ये गर्भे यैश्च प्रणो[णो]दितम्
मन्त्रव्याहारिणो ये च ऐश्वर्यात्सर्वगाश्च ये । इत्येते ऋषिभिर्युक्ता देवद्विजनृपास्तु ये ॥ ९२
एतान्भावानधीयाना ये चैत ऋषयो मताः । सप्तैते सप्तभिश्चैव गुणैः सप्तर्षयः स्मृताः ॥ ९३
दीर्घायुषो मन्त्रकृत ईश्वरा दिव्यचक्षुषः । वृद्धाः प्रत्यक्षधर्माणो गोत्रप्रावर्तकाश्च ये ॥ ९४
षट्कर्माभिरता नित्यं शालिनो गृहमेधिनः । तुल्यैर्व्यवहरन्ति स्म अदृष्टैः कर्महेतुभिः ॥ ९५
अग्राम्यैर्वर्तयन्ति स्म रसैश्चैव स्वयंकृतैः । कुटुम्बिन ऋद्धिमन्तो बाह्यान्तरनिवासिनः ॥ ९६
कृतादिषु युगाख्येषु सर्वेष्वेव पुनः पुनः । वर्णाश्रमव्यवस्थानं क्रियन्ते प्रथमं तु वै ॥ ९७
प्राप्ते त्रेतायुगमुखे पुनः सप्तर्षयस्त्विह । प्रवर्तयन्ति ये वर्णानाश्रमांश्चैव सर्वशः ॥
तेषामेवान्वये वीरा उत्पद्यन्ते पुनः पुनः ॥ ९९
जायमाने पिता पुत्रे पुत्रः पितरि चैव हि । एवं समेत्याविच्छेदाद्वर्तयन्त्यायुगक्षयात् ॥
अष्टाशीतिसहस्राणि प्रोक्तानि गृहमेधिनाम् ॥ ९९
अर्यम्णो दक्षिणा ये तु पितृयाणं समाश्रिताः । दाराग्निहोत्रिणस्ते वै ये प्रजाहेतवः स्मृताः ॥
गृहमेधिनां च संख्येयाः श्मशानान्याश्रयन्ति ते । अष्टाशीतिसहस्राणि निहिता उत्तरायणे ॥
ये श्रूयन्ते दिवं प्राप्ता ऋषयो ह्यूर्ध्वरेतसः । मन्त्रब्राह्मणकर्तारो जायन्ते ह युगक्षये ॥
एवमावर्तमानास्ते द्वापरेषु पुनः पुनः । कल्पनां भाष्यविद्यानां नानाशास्त्रकृतः क्षये ॥
+क्रियते तैर्विवरणं त्रेतादौ संयुगे प्रभुः ॥ १०३

+ इदमर्धं नास्ति क. घ पुस्तकयोः ।

१ ख. घ °या देवर्षि° । २ °भ्यो ब्रह्मर्षि° । ३ ग. ङ °प्रभृत° । ४ ख. घ °वाँघ । ५ घ. °पश्चात° । ६ घ. वैधये वं° । ७ ख. ग. ङ °त चारियैर्ं । घ °त वा ऋर्षि° । ८ सप्त ते । ९ ख घ. बुद्ध । १० क ग घ °न प्रव° । ११ ग घ शालीना गृ । १२ ख. ग. घ. ङ. अदृष्टै । १३ ख. ग घ ङ °गान्यासु सर्वास्तेव । १४ °दाद्वर्त्य° । १५ क घ ङ °यान स° । १६ ग ङ. °ये । क्रियते तै°र्यंवत्रानित° । म° ।

भविष्ये द्वापरे चैव द्रौणिर्द्वैपायनः पुनः । वेदव्यासो ह्यतीतेऽस्मिन्भविता सुमहातपाः ॥ १०४
भविष्यन्ति भविष्येषु शाखाप्रणयनानि तु । तस्मै तद्ब्रह्मणा ब्रह्म तपसा प्राप्तमव्ययम् ॥१०५
तपसा कर्म संप्राप्तं कर्मणा हि ततो यशः । यशसा प्राप्य सत्यं हि सत्येनाप्नो हि चाव्ययः ॥
अव्ययादमृतं शुक्रममृतात्सर्वमेव हि । ध्रुवमेकाक्षरमिदं स्वात्मन्येव व्यवस्थितम् ॥
बृहत्त्वाद्बृंहणाच्चैव तद्ब्रह्मेत्यभिधीयते ॥ १०७
प्रणवावस्थितं भूयो भूर्भुवः स्वरिति स्मृतम् । ऋग्यजुः सामाथर्वाणं यत्तस्मै ब्रह्मणे नमः ॥ १०८
+जगतः प्रलयोत्पत्तौ यत्तत्कारणसंज्ञितम् । महतः परमं गुह्यं तस्मै सुब्रह्मणे नमः ॥ १०९
अगाधपारमक्षय्यं जगत्संमोहनालयम् । सप्रकाशप्रवृत्तिभ्यां पुरुषार्थप्रयोजनम् ॥ ११०
सांख्यज्ञानवतां निष्ठा गतिः संर्गदमात्मनः । यत्तदव्यक्तममृतं प्रकृतिर्ब्रह्म शाश्वतम् ॥ १११
प्रधानमात्मयोनिश्च गुह्यं सत्त्वं च शब्द्यते । अविभागस्तथा शुक्रमक्षरं बहुवाचकम् ॥
परमब्रह्मणे तस्मै नित्यमेव नमो नमः ॥ ११२
कृते पुनः क्रिया नास्ति कुत एवाकृतक्रिया । सकृदेव कृतं सर्वं यद्वै लोके कृताकृतम् ॥ ११३
श्रोतव्यं वै श्रुतं वाऽपि तथैवासाधुसाधुनाम् । ज्ञातव्यं चाथ मन्तव्यं स्प्रष्टव्यं भोज्यमेव च ॥
द्रष्टव्यं चाथ श्रोतव्यं घ्रातव्यं वाऽथ किंचन ॥ ११४
दर्शितं यदनेनैव ज्ञानं तद्वै सुरर्षिणाम् । यद्वै दर्शितवानेष कस्तदन्वेष्टुमर्हति ॥
सर्वाणि सर्वान्सर्वांश्च भगवानेव सोऽब्रवीत् ॥ ११५
यदा यत्क्रियते येन तदा तत्सोऽभिमन्यते । *येनेदं क्रियते पूर्वं तदन्येन विभावितम् ॥
यदा तु क्रियते किंचित्केन चिद्वैाभ्ययं कचित् । तेनैव तत्कृतं पूर्वं कर्तॄणां प्रतिभाति वै ॥ ११७
विरक्तं चातिरिक्तं च ज्ञानाज्ञाने प्रियाप्रिये । धर्माधर्मौ सुखं दुःखं मृत्युश्चामृतमेव च ॥
ऊर्ध्वं तिर्यगधोभागस्तस्यैवादृष्टकारणम् ॥ ११८
स्वायंभुवोऽथ ज्येष्ठस्य ब्रह्मणः परमेष्ठिनः । प्रत्येकैविधं भवति त्रेतास्विह पुनः पुनः ॥ ११९
व्यस्यते ह्येकविधं तद्द्वापरेषु पुनः पुनः । ब्रह्मा चैतदुवाचाऽऽदौ तस्मिन्वैवस्वतेऽन्तरे ॥ १२०
आवर्तमाना ऋषयो युगाख्यासु पुनः पुनः । कुर्वन्ति संहिता ह्येते जायमानाः परस्परम् ॥
अष्टाशीतिसहस्राणि श्रुतर्षीणां स्मृतानि वै । ता एव संहिता ह्येत आवर्तन्ते पुनः पुनः ॥ १२२
श्रिता दक्षिणपन्थानं ये श्मशानानि भेजिरे । युगे युगे तु ताः शाखा व्यस्यन्ते तैः पुनः पुनः
द्वापरेष्विह सर्वेषु संहिताश्च श्रुतर्षिभिः । तेषां गोत्रेष्विमाः शाखा भवन्तीह पुनः पुनः ॥
ताः शाखास्तत्र कर्तारो भवन्तीह युगक्षयात् ॥ १२४

+ नास्त्ययं श्लोकः ख. घ. पुस्तकयोः । * इदमर्धस्थाने यथेदं क्रियते पूर्वं नैतदन्येन भावितमिति ख. घ. ङ. पुस्तकेषु ।

१ ग. घ. ङ. च्यावेश्व° । २ ङ. तपसा कर्मणा प्राप्तं कर्मणा वाऽपि तेजसा । पुनश्च तेजसा सत्यं सत्येनाप्नोति चाव्ययम् । प्रम प्रणामेन शुक्रमहेशामृतमुच्यते । ३ घ °र्मणा प्राप्तं कर्मणा वाऽपि तेजसा । पुनश्च तेजसा सत्यं सत्येनाप्नोति चाव्ययम् । तपसा कर्मणा प्राप्तं ब्रह्मयामृतमुच्यते । ध्रु° । ४ क. °र्धकपिगे ब्र° । ५ क घ. °णावापर° । ६ ख °गतिरिग° । ७ घ. ह्यते । ८ घ °चैव सारासा° । ९ °भ्रष्टव्य° । १० ग. घ. ङ. घ्रातव्य । ११ घ. ङ. °विना । यद्वै° । १२ ग घ. ङ. °र्तं । १३ घ. भवेत् । १४ ख. घ. °तिरक्त । १५ ग. °स्येव । १६ ख. ह्येता° । १७ ग घ. ङ. °भ्युप° ।

( प्रजापतिवंशानुकीर्तनम् )

एवमेव तु विज्ञेयं व्यतीतानागतेष्विह । मन्वन्तरेषु सर्वेषु शाखाप्रणयनानि वै ॥ १२५
अतीतेषु अतीतानि वर्तन्ते सांप्रतेषु च । भविष्याणि च यानि स्युर्वर्ण्यन्तेऽनागतेष्वपि ॥
पूर्वेण पश्चिमं ज्ञेयं वर्तमानेन चोभयम् । एतेन क्रमयोगेन(ण)मन्वन्तरविनिश्चयः ॥ १२७
एवं देवाश्च पितर ऋषयो मनवश्च ये । मन्त्रैः सहोर्ध्वं गच्छन्ति ह्यावर्तन्ते च तैः सह ॥ १२८
जनलोकात्सुराः सर्वे पशुकल्पात्पुनः पुनः । पर्याप्तकाले संप्राप्ते संभूता नैव[ध]नस्य तु ॥ १२९
अवश्यंभाविनाऽर्थेन संबध्यन्ते तदा तु ते । ततस्ते दोषवज्जन्म पश्यन्ते रागपूर्वकम् ॥ १३०
निवर्तते तदा वृत्तिस्तेषामादोषदर्शनात् । एवं देवयुगानीह दश कृत्वा निवर्तते ॥ १३१
जनलोकात्तपोलोकं गच्छन्तीहानिवर्तनम् । एवं देवयुगानीह व्यतीतानि सहस्रशः ॥
निधनं ब्रह्मलोके वै गतानि मुनिभिः सह ॥ १३२
न शक्यमानुपूर्वेण तेषां वक्तुं सविस्तरात् । अनादित्वाच्च कालस्य असंख्यानाच्च सर्वशः ॥
मन्वन्तराण्यतीतानि यानि कल्पैः पुरा सह । पितृभिर्मुनिभिर्देवैः सार्धं सप्तर्षिभिश्च वै ॥
कालेन प्रतिसृष्टानां युगानां च निवर्तनम् ॥ १३४
एतेन क्रमयोगेन(ण)कल्पमन्वन्तराणि तु । सप्रजानि व्यतीतानि शतशोऽथ सहस्रशः ॥ १३५
मन्वन्तरान्ते संहारः संहारान्ते च संभवः । देवतानामृषीणां च मनोः पितृगणस्य च ॥ १३६
न शक्यमानुपूर्व्येण वक्तुं वर्षशतैरपि । विस्तरस्तु निसर्गस्य संहारस्य च सर्वशः ॥
मन्वन्तरस्य संख्या तु मानुषेण निबोधत ॥ १३७
देवतानामृषीणां च संख्यानार्थविशारदैः । त्रिंशत्कोट्यस्तु संपूर्णाः संख्याताः संख्यया द्विजैः
सप्तषष्टिस्तथाऽन्यानि नियुतानि च संख्यया । विंशतिश्च सहस्राणि कालोऽयं साधिकाद्विना ॥
मन्वन्तरस्य संख्यैषा मानुषेण प्रकीर्तिता । वत्सरेणैव दिव्येन प्रवक्ष्याम्यन्तरं मनोः ॥ १४०
अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतम् । द्विपञ्चाशत्तथाऽन्यानि सहस्राण्यधिकानि तु ॥
चतुर्दशगुणो ह्येष काल आभूतसंप्लवः । पूर्णं युगसहस्रं स्यात्तदहर्ब्रह्मणः स्मृतम् ॥ १४२
तत्र सर्वाणि भूतानि दग्धान्यादित्यरश्मिभिः । ब्रह्माणमग्रतः कृत्वा सह देवर्षिदानवैः ॥
प्रविशन्ति सुरश्रेष्ठं देवदेवं महेश्वरम् ॥ १४३
स स्रष्टा सर्वभूतानि कल्पादिषु पुनः पुनः । इत्येष स्थितिकालो वै मनोर्देवर्षिभिः सह ॥ १४४
सर्वमन्वन्तराणां वै प्रतिसंधिं निबोधत । युगाख्या या समुद्दिष्टा प्रागेवास्मिन्मयाऽनघाः ॥
कृतत्रेतादिसंयुक्तं चतुर्युगमिति स्मृतम् । तदेकसप्ततिगुणं परिवृत्तं तु साधिकम् ॥
मनोरेतमधीकारं प्रोवाच भगवान्प्रभुः ॥ १४६
एवं मन्वन्तराणां तु सर्वेषामेव लक्षणम् । अतीतानागतानां वै वर्तमानेन कीर्तितम् ॥ १४७
इत्येष कीर्तितः सर्गो मनोः स्वायंभुवस्य ह । प्रतिसंधिं तु वक्ष्यामि तस्य चैवापरस्य तु ॥
मन्वन्तरं यथा पूर्वमृषिभिर्दैवतैः सह । अवश्यंभाविनाऽर्थेन यथा तद्वै निवर्तते ॥ १४९

---

१ घ. °तेविह । पू° । २ ख. ग घ ङ. °र्यासप्त° । ३ ख. घ. नैधन° । ४ ख. घ. ङ. °वश्यभा° । ५ ख. घ. °स्यन्तो रागपू° । ६ ग घ. °रात् । अ° । ७ क. °य मोऽधिक निग । घ ङ °य सप्तर्षिभि[illegible] । ८ ख. ङ. घ. ङ. °मृ । द्वापं । ९ ङ °त्या क° । १० क °या तत्र । ङ. । ११ ग. °नितम । ग° । १२ क.

अस्मिन्मन्वन्तरे पूर्वं त्रैलोक्यस्येश्वरास्तु ये । सप्तर्षयश्च देवास्ते पितरो मनवस्तथा ॥
मन्वन्तरस्य काले तु संपूर्णे साधकास्तथा ॥ १५०
क्षीणाधिकाराः संवृत्ता बुद्ध्वा पर्यायमात्मनः । महर्लोकाय ते सर्वे उन्मुखा दधिरे गतिम् ॥
ततो मन्वन्तरे तस्मिन्प्रक्षीणा देवतास्तु ताः । संपूर्णे स्थितिकाले तु तिष्ठन्त्येकं कृतं युगम् ॥
उत्पद्यन्ते भविष्याश्च यावन्मन्वन्तरेश्वराः । देवताः पितरश्चैव ऋषयो मनुरेव च ॥ १५३
मन्वन्तरे तु संपूर्णे पद्यन्पद्धे कलौ युगे । संपद्यते कृतं तेषु कलिशिष्टेषु वै तदा ॥ १५४
यथा कृतस्य संतानः कलिपूर्वः स्मृतो बुधैः । तथा मन्वन्तरान्तेषु आदिर्मन्वन्तरस्य च ॥ १५५
क्षीणे मन्वन्तरे पूर्वे प्रवृत्ते चापरे पुनः । मुखे कृतयुगस्याथ तेषां शिष्टास्तु ये तदा ॥ १५६
सप्तर्षयो मनुश्चैव कालावेक्षास्तु ये स्थिताः । मन्वन्तरं प्रतीक्षन्ते क्षीयन्ते तपसि स्थिताः ॥
मन्वन्तरव्यवस्थार्थं संतत्यर्थं च सर्वशः । पूर्ववत्संप्रवर्तन्ते प्रवृत्ते वृष्टिसर्जने ॥ १५८
द्वन्द्वेषु संप्रवृत्तेषु उत्पन्नास्वोषधीषु च । प्रजासु च निकेतासु संस्थितासु क्वचित्क्वचित् ॥ १५९
वार्तायां तु प्रवृत्तायां सद्धर्मे ऋषिभाविते । निरानन्दे गते लोके नष्टे स्थावरजङ्गमे ॥ १६०
अग्रामनगरे चैव वर्णाश्रमविवर्जिते । पूर्वमन्वन्तरे शिष्टे ये भवन्तीह धार्मिकाः ॥
सप्तर्षयो मनुश्चैव संतानार्थं व्यवस्थिताः ॥ १६१
प्रजार्थं तपता तेषां तपः परमदुश्चरम् । उत्पद्यन्तीह सर्वेषां निधनेष्विह सर्वशः ॥ १६२
देवासुराः पितृगणा मुनयो मनवस्तथा । सर्पा भूताः पिशाचाश्च गन्धर्वा यक्षराक्षसाः ॥ १६३
ततस्तेषां तु ये शिष्टाः शिष्टाचारान्प्रचक्षते । सप्तर्षयो मनुश्चैव आदौ मन्वन्तरस्य ह ॥
प्रारभन्ते च कर्माणि मनुष्या दैवतैः सह ॥ १६४
मन्वन्तरादौ प्रागेव त्रेतायुगमुखे ततः । पूर्वं देवास्ततस्ते वै स्थिते धर्मे तु सर्वशः ॥ १६५
ऋषीणां ब्रह्मचर्येण गत्वाऽनृण्यं तु वै ततः । पितॄणां प्रजया चैव देवानामिज्यया तथा ॥[1] १६६
शतं वर्षसहस्राणि धर्मे वर्णात्मके स्थिताः । त्रयीं वार्तां दण्डनीतिं धर्मान्वर्णाश्रमांस्तथा ॥
स्थापयित्वाऽऽश्रमांश्चैव स्वर्गाय दधिरे मतीः ॥ १६७
पूर्वं देवेषु तेष्वेव स्वर्गाय प्रमुखेषु च । पूर्वं देवास्ततस्ते वै स्थिता धर्मेण कृत्स्नशः ॥ १६८
मन्वन्तरे परावृत्ते स्थानान्युत्सृज्य सर्वशः । मन्त्रैः सहोर्ध्वं गच्छन्ति महर्लोकमनामयम् ॥ १६९
विनिवृत्ताधिकारास्ते मानसीं सिद्धिमास्थिताः । अवेक्षमाणा वशिनस्तिष्ठन्त्याभूतसंप्लवम् ॥
ततस्तेषु व्यतीतेषु सर्वेष्वेतेषु सर्वदा । शून्येषु देवस्थानेषु त्रैलोक्ये तेषु सर्वशः ॥
उपस्थिता इहैवान्ये देवा ये स्वर्गवासिनः ॥ १७१
ततस्ते तपसा युक्ता स्थानान्यापूरयन्ति वै । सत्येन ब्रह्मचर्येण श्रुतेन च समन्विताः ॥ १७२
सप्तर्षीणां मनोश्चैव देवानां पितृभिः सह । निधनानीह पूर्वेषामादिना च भविष्यताम् ॥ १७३
तेषामन्वयविच्छेद इह मन्वन्तरक्षयात् । एवं पूर्वानुपूर्वेण स्थितिरेषाऽनवस्थिता ॥
मन्वन्तरेषु सर्वेषु यावदाभूतसंप्लवम् ॥ १७४
एवं मन्वन्तराणां तु प्रतिसंधानलक्षणम् । अतीतानागतानां तु प्रोक्तं स्वायंभुवेन तु ॥ १७५

१ [illegible]

मन्वन्तरेष्वतीतेषु भविष्याणां तु साधनम् । एवमत्यन्तविच्छिन्नं भवत्याभूतसंप्लवात् ॥ १७६

मन्वन्तराणां परिवर्तनानि एकान्ततस्तानि महर्गतानि ॥
महर्जनं चैव जनं तपश्च एकान्तगानि स्म भवन्ति सत्ये ॥ १७७
तत्स्थायिनां तत्र तु दर्शनेन नानान्वदृष्टेन च प्रत्ययेन ॥
सत्ये स्थितानीह तदा तु तानि प्राप्ते विकारे प्रतिसर्गकाले ॥ १७८
मन्वन्तराणां परिवर्तनानि मुञ्चन्ति सत्यं तु ततोऽपरान्ते ॥
ततोऽभियोगाद्विपमप्रमाणं विशन्ति नारायणमेव देवम् ॥ १७९
मन्वन्तराणां परिवर्तनेषु चिरप्रवृत्तेषु विधिस्वभावात् ॥
क्षणं रसं तिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ॥ १८०
इत्युत्तराण्येवमृषिस्तुतानां धर्मात्मनां दिव्यदृशां मनूनाम् ॥
वायुप्रणीतान्युपलभ्य दृश्यं दिव्यौजसा व्याससमासयोगैः ॥ १८१
सर्वाणि राजर्षिसुरर्षिमन्ति ब्रह्मर्षिदेवोरगवन्ति चैव ॥
सुरेशसप्तर्षिपितृप्रजेशैर्युक्तानि सम्यक्परिवर्तनानि ॥ १८२
उदारवंशाभिजनद्युतीनां प्रकृष्टमेधाभिसमेधितानाम् ॥
कीर्तिद्युतिख्यातिभिरन्वितानां पुण्यं हि विख्यापनमीश्वराणाम् ॥ १८३
स्वर्गीयमेतत्परमं पवित्रं पुत्रीयमेतच्च परं रहस्यम् ॥
जप्यं महत्पर्वसु चैतदग्र्यं दुःस्वप्नशान्तिः परमायुषेयम् ॥ १८४
प्रजेशदेवर्षिमनुप्रधाना पुण्यप्रसूतिः प्रथिताप्रजस्य ॥
ममापि विख्यापनसंयमाय सिद्धिं जुषध्वं सुमहेशतत्त्वम् ॥ १८५
इत्येतदन्तरं प्रोक्तं मनोः स्वायंभुवस्य तु । विस्तरेणाऽऽनुपूर्व्या च भूयः किं वर्णयाम्यहम् ॥ १८६

इति श्रीमहापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्तनं नामैकषष्टोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६०८६

---

अथ द्विषष्टोऽध्यायः ।

---

पृथिवीदोहनम् ।

शांशपायन उवाच—

सर्वमन्वन्तराणां तु ज्ञातुमिच्छामि तत्त्वतः । देवतानां च सर्वेषां ये च यस्यान्तरे मनोः ॥ १

सूत उवाच—

मन्वन्तराणि यानि स्युरतीतानागतानि ह । समासाद्विस्तराच्चैव ब्रुवतो मे निबोधत ॥ २
स्वायंभुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा । औत्तमस्तामसश्चैव तथा रैवतचाक्षुषौ ॥
षडेते मनवोऽतीता वक्ष्याम्यष्टावनागतान् ॥ ३

---

[illegible]
[illegible]

५८

सावर्णिः पञ्चरौच्यश्च भौत्यो वैवस्वतस्तथा । वक्ष्याम्येनान्पुरस्तात्तु मनोर्वैवस्वतस्य ह ॥ ४
मनवः पञ्च येऽतीता मानवांस्तान्निबोधत । मन्वन्तरं मया चोक्तं क्रान्तं स्वायंभुवस्य ह ॥ ५
अत ऊर्ध्वं प्रवक्ष्यामि मनोः स्वारोचिषस्य च । प्रजासर्गं समासेन द्वितीयस्य महात्मनः ॥ ६
*आसन्वै तुषिता देवा मनुस्वारोचिषेऽन्तरे । पारावताश्च विद्वांसो द्वावेव तु गणौ स्मृतौ ॥ ७
तुषितायां समुत्पन्नाः क्रतोः पुत्राः स्वरोचिषेः । पारावताश्च शिष्टाश्च द्वादशौ तौ गणौ स्मृतौ ॥
छन्दजाश्च चतुर्विंशद्देवास्ते वै तदा स्मृताः ॥ ८
धैवस्य शोऽथ वामान्यो गोपा देवायनस्तथा । अजश्च भगवान्देवो दुरोणश्च महाबलः ॥ ९
आपश्चापि महाव दुर्पहौजाश्चापि वीर्यवान् । चिकित्वान्निभृतो यश्च अंशो यश्चैव पठ्यते ॥
×अजश्च द्वादशस्तेषां तुषिताः परिकीर्तिताः । इत्येते क्रतुपुत्रास्तु तदाऽऽसन्सोमपायिनः ॥ ११
प्रचेताश्चैव यो देवो विश्वदेवास्तथैव च । समञ्जो विश्रुतो यश्च अजिह्मश्चारिमर्दनः ॥ १२
अजिह्मानमहीयानौ विद्यावन्तौ तथैव च । अजोपौ च महाभागौ यवीयश्च महाबलः ॥ १३
होता यज्वा च इत्येते पराक्रान्ताः परावताः । इत्येता देवता ह्यासन्मनुस्वारोचिषेऽन्तरे ॥ १४
सोमपास्तु तदा ह्येताश्चतुर्विंशतिर्देवताः । तेषामिन्द्रस्तदा ह्यासीद्विपश्च लोकविश्रुतः ॥ १५
ऊर्जो वसिष्ठपुत्रस्तु स्तम्भः काश्यप एव च । भार्गवश्च तदा द्रोणो ऋषभोऽङ्गिरसस्तथा ॥ १६
[+ पौलस्त्यश्चैव दत्तात्रिरात्रेयो निश्चलस्तथा । पौलहस्य च धावांस्तु एते सप्तर्षयः स्मृताः]१७
चैत्रः कविस्तथैव कृतान्तो विभृतो रविः । बृहद्गुहो नवश्चैव शुभाश्चैते नव स्मृताः ॥ १८
मनोः स्वारोचिषस्यैते पुत्रा वंशकराः स्मृताः । पुराणे परिसंख्याता द्वितीयं चैतदन्तरम् ॥ १९
सप्तर्षयो मनुर्देवाः पितरश्च चतुष्टयम् । मूलं मन्वन्तरस्यैते तेषां चैवान्तरे प्रजाः ॥ २०
ऋषीणां देवताः पुत्राः पितरो देवसूनवः । ऋषयो देवपुत्राश्च इति शास्त्रविनिश्चयः ॥ २१
मनोः क्षत्रं विशश्चैव सप्तर्षिभ्यो द्विजातयः । एतन्मन्वन्तरं प्रोक्तं समासान्न तु विस्तरात् ॥ २२
स्वायंभुवेन विस्तारो ज्ञेयः स्वारोचिषस्य तु । न शक्यो विस्तरस्तस्य वक्तुं वर्षशतैरपि ॥
पुनरुक्तबहुत्वात्तु प्रजानां वै कुले कुले ॥ २३
तृतीयस्त्वथ पर्याये औत्तमस्यान्तरे मनोः । पञ्च देवगणाः प्रोक्तास्तान्वक्ष्यामि निबोधत ॥ २४
सुधामानश्च देवाश्च ये चान्ये वशवर्तिनः । प्रतर्दनाः शिवाः सत्या गणा द्वादश वै स्मृताः ॥
सत्यो धृतिर्दमो दान्तः क्षमः क्षामो धृतिः शुचिः । ईषोर्ज्जाश्च तथा ज्येष्ठो वपुष्मांश्चैव द्वादश ॥
इत्येते नामभिः क्रान्ताः सुधामानस्तु द्वादश ॥ २५
सहस्रधारो विश्वात्मा शमितारो बृहद्वसुः । विश्वधा विश्वकर्मा च मनस्वन्तो विराड्वशाः ॥
ज्योतिश्चैव विभावश्च कीर्तिमन्तो वशकारिणः । अन्यानाराधितो देवो वसुधिष्णो विवस्वसुः ॥

* इदमर्धं नास्ति घ पुस्तके । × इदमर्धं नास्ति क. पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति ।

१ ग. ट. पुनस्तस्तु म । २ ग. ड. चोक्तो । ३ ख. ग. ड. मनोः स्वा° । ४ ख. ग. ड. °रे । परा° । ५ ख. घ. °वः । परा° । ६ ख. घ. °ताः । वैधस्य । ७ ख. पदाशं । ग. घ. ड. पदक्षं । ८ घ. तथा । ९ ड. °विकृत° । १० ख. घ. विश्रुतो । ११ क. °व सुताधे° । १२ ख ष्वेषु परिख्या° । १३ ग. घ. ड. सत्य । १४ ख. °य उत्° । १५ क. °श्च चैव । १६ ख. घ. °तिर्मिदो दा° । १७ ख. स्मृतिः । १८ ख. घ. शतधारो । १९ ग. घ. ड. °स्वधा । ज्यो° । २० ख. घ. °धिने देवो व° । २१ ग. ड °धिरो वि° ।

(पृथिवीदोहनम्)

दिनक्रतुः सुधर्मा च धृतवर्मा यशस्विनः । केतुमांश्चैव इत्येते कीर्तितास्तु प्रमर्दनाः ॥ २८

हंसस्वरोऽहिहा चैव प्रतर्दनयशस्करौ । सुदानो वसुदानश्च सुमञ्जसविषावुभौ ॥ २९

यमु वाहयतिश्चैव सुविर्त्तसुनयस्तथा । शिवा ह्येते तु विज्ञेया यज्ञिया द्वादशापराः ॥ ३०

सत्त्वानामपि नामानि निबोधत यथामतम् । दिक्पतिर्वाक्पतिश्चैव विश्वः शंभुस्तथैव च ॥ ३१

स्वमृडीकोऽधिपश्चैव वर्चोधा सुद्यसर्वश्चः । वासवश्च मदाश्वश्च क्षेमानन्दौ तथैव च ॥ ३२

सत्या ह्येते परिक्रान्ता यज्ञिया द्वादशापराः । इत्येता देवता ह्यासन्नौत्तमस्यान्तरे मनोः ॥ ३३

अजश्च परशुश्चैव दिव्यो दिव्यौषधिर्नयः । देवानुजश्चाप्रतिमो महोत्साहौशिजस्तथा ॥ ३४

विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः । औत्तमस्य मनोः पुत्रास्त्रयोदश महात्मनः ॥

एते क्षत्रप्रणेतारस्तृतीयं चैतदन्तरम् ॥

औत्तमो परिसंख्यातः सर्गः स्वारोचिषेण तु । विस्तरेणाऽऽनुपूर्व्या च तामसांस्तान्निबोधत ॥

चतुर्थे त्वथ पर्याये तामसस्यान्तरे मनोः । [*सत्योः स्वरूपाः सुधियो हरयश्चतुरो गणाः ॥ ३७

पुलस्त्यपुत्रस्य सुतास्तामसस्यान्तरे मनोः ] । गणस्तु तेषां देवानामेकैकः पञ्चविंशकः ॥ ३८

इन्द्रियाणां शतं यद्धि मुनयः प्रतिजानते । सत्यभागास्तु शीर्षण्यास्तमश्चैवाष्टमस्तथा ॥

इन्द्रियाणि सदा देवा मनोस्तस्यान्तरे स्मृताः ॥ ३९

तेषां च प्रभुदेवानां शिबिरिन्द्रः प्रतापवान् । सप्तर्षयोऽन्तरे चैव तान्निबोधत सत्तमाः ॥ ४०

काव्यो हर्षस्तथा चैव काश्यपः पृथुरेव च । आत्रेयश्चाग्निरित्येव ज्योतिर्धामा च भार्गवः ॥ ४१

पौलहो वनपीठश्च गोत्रवासिष्ठ एव च । चैत्रस्तथाऽपि पौलस्त्य ऋषयस्तामसेऽन्तरे ॥ ४२

जनुर्घण्डस्तथा शान्तिर्नरः ख्यातिर्भयस्तथा । प्रियभृत्यो ह्यवक्षिश्च पृथुलोढो दृढोद्यतः ॥

ऋतश्च ऋतबन्धुश्च तामसस्य मनोः सुताः ॥ ४३

पञ्चमे त्वथ पर्याये मनोश्चारिष्णवेऽन्तरे । गणांस्तु सुमहाभागाना देवतानां निबोधत ॥ ४४

अमृताश्माभूतरजोविकुण्ठाः ससुमेधसः । चरिष्णोस्तु शुभाः पुत्रा वसिष्ठस्य प्रजापतेः ॥

चतुर्दश च चत्वारो गणास्तेषां तु भास्वराः ॥ ४५

स्वंप्रविप्रोऽग्निभासश्च प्रत्येतिष्ठामृतस्तथा । सुमतिर्वाविरावश्च वाचिनोदःस्वरास्तथा ॥ ४६

भविराशी च वादश्च प्राशश्चेति चतुर्दश । अमृताभाः स्मृता ह्येते देवाश्चारिष्णवेऽन्तरे ॥ ४७

मतिश्च सुमतिश्चैव ऋतसत्यौ तथैव च । आहृतिर्विहृतिश्चैव मदो विनय एव च ॥ ४८

---

* धनुश्चिह्नान्तर्गतग्रन्थो ख. घ. पुस्तकयोर्नास्ति ।

---

१ ग. घ. ङ. °स्विजाः । के° । २ घ. ङ. प्रतर्दनाः । घ प्रदर्शनाः । ३ क. °भो । जन्तुवा° । ४ ख. ग. घ ङ. °समुन° । ५ ग. °राः । पश्चाना° । ६ क. ख. सत्याना° । ७ ख. ग घ ङ. °शः । राभश्चैव ग° । ८ घ. °हाबलाः । ए । ९ ग. ङ. °स्याः सुराराः सुरिहा ह° । १० घ. ङ. कश्यपः । ११ क ख. ग. °तिधा° । १२ ग. ङ. °र्गवाः । पौ° । १३ क. गोत्रे वा° । । १४ ख च । चित्र° । १५ ख. °रे । अनु घण्टुस्त° । घ. °रे । अनुर्दण्ड° । १६ ग. ङ. °घण्टस्त° । १७ घ. ङ. °लोढदेपुधृन् । इतथ कृत° । १८ ख. घ. ङ. °स्तु ये स° । १९ ख. ग. घ. ङ. °ताभो भूतरजा वैकुण्ठः स° । २० क स्वत्रोवि° । २१ ग. घ. °श्च सत्याति° । २२ ख ङ. °नोदश्रवा° । २३ ख घ. ङ. मतिरागी च । २४ ख. घ. ङ. °श्च घतश्चे° । ग. °श्च घातश्चेति । २५ ख. ग. घ. ङ. च । अवृ° ।

जेता जिष्णुः सहश्चैव द्युतिमोऽन्ध्रवसस्तथा । इत्येतानीह नामानि आभूतरजसां विदुः ॥ ४९
वृषभेत्ता जयो भीमः शुचिर्दान्तो यशो दमः । नाथो विद्वानजेयश्च कृशो गौरो ध्रुवस्तथा ॥
कीर्तितास्तु विकुण्ठा वै सुमेधांस्तु निबोधत ॥ ५०
मेधा मेधातिथिश्चैव सत्यमेधास्तथैव च । पृश्निमेधाल्पमेधाश्च भूयोमेधादयः प्रभुः ॥ ५१
दीप्तिमेधा यशोमेधा स्थिरमेधास्तथैव च । सर्वमेधाश्वमेधाश्च प्रतिमेधाश्च यः स्मृतः ॥
मेधावान्मेधहर्ता च कीर्तितास्तु सुमेधसः ॥ ५२
विभुरिन्द्रस्तदा तेषामासीद्विक्रान्तपौरुषः । पौलस्त्यो वेदबाहुश्च यजुर्नामा च काश्यपः ॥ ५३
हिरण्यरोमाङ्गिरसो वेदश्रीश्चैव भार्गवः । ऊर्ध्वबाहुश्च वासिष्ठः पर्जन्यः पौलहस्तथा ॥
सत्यनेत्रस्तथाऽऽत्रेया ऋषयो रैवतान्तरे ॥ ५४
महापुराणसंभाव्यः प्रत्यङ्गपरहा शुचिः । बलबन्धुर्निरामित्रः केतुशृङ्गो दृढव्रतः ॥
चरिष्णवस्य पुत्रास्ते पञ्चमं चैतदन्तरम् ॥ ५५
स्वारोचिषोत्तमश्चैव तामसो रैवतस्तथा । प्रियव्रतान्वया ह्येते चत्वारो मनवस्तथा ५६
षष्ठे खल्वथ पर्याये देवा ये चाक्षुषेऽन्तरे । आद्याः प्रसूता भाव्याश्च पृथुकाश्च दिवौकसः ॥
महानुभावा लेखाश्च पञ्च देवगणाः स्मृताः ॥ ५७
दिवौकसः सर्ग एष प्रोच्यते मातृनामभिः । अत्रेः पुत्रस्य नप्तार आरण्यस्य प्रजापतेः ॥
गणश्च तेषां देवानामेकैको ह्यष्टकः स्मृतः ॥ ५८
अन्तरीक्षो वसुहयो ह्यतिथिश्च प्रियव्रतः । श्रोता मन्ता सुमन्ता च आद्या ह्येते प्रकीर्तिताः ॥५९
श्येनभद्रस्तथा पथ्यः पथ्यनेत्रो महायशाः । सुमनाश्च सुचेताश्च रेवतः सुप्रचेतसः ॥
द्युतिश्चैव महासत्त्वः प्रसूताः परिकीर्तिताः ॥ ६०
विजयः सुजयश्चैव मनोद्यानौ तथैव च । सुमतिः सुपरिश्चैव विज्ञातोऽर्थपतिश्च यः ॥
भाव्या ह्येते स्मृता देवाः पृथुकांस्तु निबोधत ॥ ६१
अजिष्टः शाक्यनो देवो यानपृष्ठस्तथैव च । शांकरः सत्यधृष्णुश्च विष्णुश्च निजयस्तथा ॥
अजितश्च महाभागः पृथुकास्ते दिवौकसः ॥ ६२
लेखांस्तथा प्रवक्ष्यामि ब्रुवतो मे निबोधत । मनोजवः प्रघासस्तु प्रचेतास्तु महायशाः ॥ ६३
यातो ध्रुवक्षितिश्चैव अद्भुतश्चैव वीर्यवान् । अवनो बृहस्पतिश्चैव लेखाः संपरिकीर्तिताः ॥ ६४
मनोजवो महावीर्यस्तेषामिन्द्रस्तदाऽभवत् । उशतो भार्गवश्चैव हविष्मानङ्गिरः सुतः ॥ ६५
सुधामा काश्यपश्चैव वासिष्ठो विरजस्तथा । अतिमानश्च पौलस्त्यः सहिष्णुः पौलहस्तथा ॥
मधुरात्रेय इत्येते सप्त वै चाक्षुषेन्तरे ॥ ६६
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाकृतिः । अग्निष्टुदतिरात्रश्च सद्युम्नश्चेति ते नव ॥ ६७

---

१ ग. घ. विभुः । २ क. 'मान्तर' । ३ ख ग ङ. पृश्नयो' । घ वृत्तार्धं' । ४ घ कश्यप. । ५ क. ग. ङ. 'रसो वे' । ६ घ 'मित्रः केतुशृङ्गो । ७ ग. ङ. 'भावा ले' । ८ ग. 'ते नाममातृभि. । ९ ग पश्यने' । १० ख. ग. सुमंता' । ११ घ. ङ. 'सूताः प' । १२ ग. घ. ङ. मनस्योनौ । १३ ख. ग. घ. ङ ।'नता ह्ये' । १४ क. घ । शाकरः सत्यधृष्णु । १५ ख. घ 'वा । ध्रुवो ध्रु' । १६ ग. घ. ङ 'मा वदरय' । १७ ख. ग. घ. ङ. अतिमा' ।

(पृथिवीदोहनम्)

अभिमन्युश्च दशमो नौड्वलेया मनोः सुताः। चाक्षुषस्य सुता ह्येते षष्ठं चैव तदन्तरम्॥ ६८
वैवस्वतेन संख्यातस्तस्य सर्गो महात्मनः। विस्तरेणाऽऽनुपूर्व्या च कथितं वै मया द्विजाः॥

ऋषय ऊचुः—

चाक्षुषस्य तु दायादः संभूतः कश्यपान्वये। तस्यान्ववाये येऽप्यन्ये तन्नो ब्रूहि यथातथम्॥ ७०

सूत उवाच—

चाक्षुषस्य निसर्गं तु समासाच्छ्रोतुमर्हथ। तस्यान्ववाये संभूतः पृथुर्वैन्यः प्रतापवान्॥ ७१
प्रजानां पतयश्चान्ये दक्षः प्राचेतसस्तथा। उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः॥ ७२
दत्तकस्य तु पुत्रोऽस्य राजा ह्यासीत्प्रजापतेः। स्वायंभुवेन मनुना दत्तोऽत्रेः कारणं प्रति॥ ७३
मन्वन्तरमथाऽऽसाद्य भविष्यं चाक्षुषस्य ह। षष्ठं तदनुवक्ष्यामि उपोद्घातेन वै द्विजाः॥ ७४
उत्तानपादाच्चतुरः सूनृता विप्रभाविनी। *धर्मस्य कन्या धर्मज्ञा सूनृता नाम विश्रुता॥ ७५
उत्पन्ना चाधिधर्मेण ध्रुवस्य जननी शुभा। धर्मस्य पत्न्यां लक्ष्म्यां वै उत्पन्ना सा शुचिस्मिता॥

ध्रुवं च कीर्तिमन्तं च अयस्मन्तं वसुं तथा। उत्तानपादोऽजनयत्कन्ये द्वे च शुचिस्मिते॥
मनस्विनीं स्वरां चैव तयोः पुत्राः प्रकीर्तिताः॥

ध्रुवो वर्षसहस्राणि दश दिव्यानि वीर्यवान्। तपस्तेपे निराहारः प्रार्थयन्विपुलं यशः॥ ७७
त्रेतायुगे तु प्रथमे पौत्रः स्वायंभुवस्य सः। आत्मानं धारयन्योगात्प्रार्थयन्सुमहद्यशः॥ ७८
तस्मै ब्रह्मा ददौ प्रीतो ज्योतिषां स्थानमुत्तमम्। आभूतसंप्लवं ह्यमस्तोदयविवर्जितम्॥ ७९
तस्यातिमात्रामृद्धिं च महिमानं निरीक्ष्य ह। दैत्यासुराणामाचार्यः श्लोकमप्युशना जगौ॥ ८०
अहोऽस्य तपसो वीर्यमहो श्रुतमहो श्रुतम्। स्थिताः सप्तर्षयः कृत्वा यत्रैनमुपरि ध्रुवम्॥
ध्रुवे दिवं समासक्तमीश्वरः स दिवस्पतिः॥ ८१
ध्रुवात्पुष्टिं च भव्यं च भूमिः सा सुषुवे नृपौ। स्वां छायामाह वै पुष्टिर्भव नारी तु तां विभुः॥
सत्याभिव्याहृते तस्य सद्यः स्त्री साऽभवत्तदा। दिव्यमंहननाच्छाया दिव्याभरणभूषिता॥ ८३
छायायां पुष्टिराधत्त पञ्च पुत्रानकल्मषान्। प्राचीनगर्भं वृषकं वृकं च ह्येकलं धृतिम्॥ ८४
पत्नी प्राचीनगर्भस्य सुवर्चा सुषुवे नृपम्। नाम्नोदारधियं पुत्रमिन्द्रो यः पूर्वजन्मनि॥ ८५
संवत्सरसहस्रान्ते सकृदाहारमाहरत्। एवं मन्वन्तरं सुकामिन्द्रत्वं प्राप्तवान्विभुः॥ ८६
उदारधेः सुतं भद्राऽजनयत्सा दिवंजयम्। रिपुं रिपुंजयं जज्ञे वराङ्गी सा दिवंजयात्॥ ८७
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम्। + तस्य पुत्रो मनुर्विद्वान्मन्वन्तरप्रवर्तकः॥ ८८
व्यजीजनत्पुष्करिण्यां वारुण्यां चाक्षुषं मनुम्। प्रजापतेरात्मजायामरण्यस्य महात्मनः॥ ८९
+ चाक्षुषं नाम विख्यातं मनुं धर्मार्थकोविदम्। मनोरजायन्त दश नड्वलायां शुभाः सुताः॥
कन्यायां वै महाभाग वैराजस्य प्रजापतेः॥ ९०

* इदमर्धं नास्ति क पुस्तके। + इदमर्धं नास्ति क पुस्तके। † इदमर्धं नास्ति क. पुस्तके।

१ घ. ङ. नाड्वले°। २ ग. तथा। मू°। ३ ख. ग. घ दत्तक°। ४ ख. ग. घ. ङ. तुरः सूनृताऽधत्तभामिनी। ५ ग. घ. ङ °ते। स्वरा मनस्वती चै°। ६ ख ग. घ. ङ [illegible]। ७ ख. घ. च धान्य च भूमिस्थौ सु°। ग. ङ. च धान्यं च भूमिस्तौ सु°। ८ ख घ. °षभं वृ°। ९ ख. घ वृषकं धृ°। १० ख. ग घ. ङ. °जयम्। रि°। ११ ख. ग. घ. ङ. °रिणीशिरणी चा°। १२ क. चाक्षुषो। १३ ख. घ ङ. °पतेः सुनाम्ना वै वीरणस्य। १४ ख. घ. ङ. °श [illegible] ल्वायां सुता। शुभा। क°। १५ ख. घ. ङ. °भाग विरज°।

ऊरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः। अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ॥
अभिमन्युश्च दशमो नड्वलायां मनोः सुताः ॥ ९१
ऊरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान् । अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं शिवम् ॥ ९२
अङ्गात्सुनीथाऽपत्यं वै वेनमेकं व्यजायत । अपचारेण वेनस्य प्रकोपः सुमहानभूत् ॥ ९३
प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिणं करम् । वेनस्य पाणौ मथिते संबभूव महर्षिभिः ॥
*वैन्यो नाम महीपालो यः पृथुः परिकीर्तितः ॥ ९४
स धन्वी कवची जातस्तेजसा प्रज्वलन्निव । पृथुर्वैन्यः सर्वलोकान्ररक्ष क्षत्रपूर्वजः ॥ ९४
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः । तस्य स्तवार्थमुत्पन्नौ निपुणौ सूतमागधौ ॥ ९५
तेनेयं गौर्महाराज्ञा दुग्धा सस्यानि धीमता । प्रजानां वृत्तिकामानां देवैर्ऋषिगणैः सह ॥ ९६
पितृभिर्दानवैश्चैव गन्धर्वैरप्सरोगणैः । सर्वैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा ॥ ९७
तेषु तेषु तु पात्रेषु दुह्यमाना वसुंधरा । प्रादाद्यथेप्सितं क्षीरं तेन लोकानधारयत् ॥ ९८

ऋषय ऊचुः—

विस्तरेण पृथोर्जन्म कीर्तयस्व महामते । यथा महात्मना दुग्धा पूर्वं तेन वसुंधरा ॥ ९९
यथा देवैश्च नागैश्च यथा ब्रह्मर्षिभिः सह । यथा यक्षैः सगन्धर्वैरप्सरोभिर्यथा पुरा ॥
+यथायथा च तैर्दुग्धा विधिना येन येन च ॥ १००
तेषां पात्रविशेषांश्च दोग्धारं क्षीरमेव च । तथा वत्सविशेषांश्च तन्नः प्रब्रूहि पृच्छताम् ॥ १०१
यस्मिंश्च कारणे पाणिर्वेनस्य मथितः पुरा । क्रुद्धैर्महर्षिभिः पूर्वं तत्सर्वं कथयस्व नः ॥ १०२

सूत उवाच—

वर्णयिष्यामि वो विप्राः पृथोर्वैन्यस्य संभवम् । एकाग्राः प्रयताश्चैव शुश्रूषध्वं द्विजोत्तमाः ॥
नाशुचेर्नापि पापाय नाशिष्यायाहिताय च । वर्णयेयमिमं पुण्यं नाव्रताय कथंचन ॥ १०४
स्वर्ग्यं यशस्यमायुष्यं पुण्यं वेदैश्च संमितम् । रहस्यमृषिभिः प्रोक्तं शृणुयाद्योऽनसूयकः ॥ १०५
यश्चेमं श्रावयेन्मर्त्यः पृथोर्वैन्यस्य संभवम् । ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत्कृताकृतम् ॥
गोप्ता धर्मस्य राजाऽसौ बभूवात्रिसमः प्रभुः ॥ १०६
अत्रिवंशसमुत्पन्नो ह्यङ्गो नाम प्रजापतिः । यस्य पुत्रोऽभवद्वेनो नात्यर्थं धार्मिकस्तथा ॥ १०७
जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः । स मातामहदोषेण वेनः कालात्मजात्मजः ॥ १०८
स धर्मं पृष्ठतः कृत्वा कामाल्लोभे व्यवर्तत । स्थापयामास मर्यादां स धर्मापेतां स पार्थिवः ॥ १०९
वेदशास्त्राण्यतिक्रम्य ह्यधर्मे निरतोऽभवत् । निःस्वाध्यायवषट्काराः प्रजास्तस्मिन्प्रशासति ॥
आसन्न च पपुः सोमं हुतं यज्ञेषु देवताः ॥ ११०

---

* एतदर्धस्थानेऽयं श्लोकः—"जनयित्वा सुतं तस्य पृथुं प्रथितपौरुषम् । प्रमुक्तस्तेन ये राजन्मुनयो मुदिताः प्रजाः" इति ख. ग. घ. ङ. पुस्तकेषु । + इदमर्धं नास्ति ङ. पुस्तके ।

---

१ ग. घ. ङ. °वा कवि. । २ ख. घ. ङ. मा । अ° । ३ ख. घ ङ. °मङ्गनमोङ्गिनम् । सुनीथामावृणितवान्हादेन° । ४ ग. घ. ङ. °दायुष । ५ ग. घ. ङ. स वै लो° । ६ ख. ग. ङ. °मार्यः स । ७ ख. ग ग. ङ. सर्वै. । ८ °ख. ग. घ. ङ. °निर्वैन्यस्य । ९ ख. घ. ङ. °र्वेति° । १० ख. ग. घ. ङ. वर्तेये° । ११ घ. वेदैः मुसंमतम् । १२ ख. ग. ङ. [illegible] ग च° । १३ ख ग. घ. °पत्नी स्या° । १४ ख ग. घ. °षेता स ।

(पृथिवीदोहनम्)

न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः । आसीत्प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥ १११
अहमिज्यश्च पूज्यश्च सर्वयज्ञे द्विजातिभिः । मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ॥ ११२
तमतिक्रान्तमर्यादमाददानमसांप्रतम् । ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तथा ॥ ११३
वयं दीक्षां प्रवक्ष्यामः संवत्सरशतान्बहून् । माऽधर्मं वेन कार्षीस्त्वं नैष धर्मः सनातनः ॥
निधने च प्रसूतोऽसि प्रजापतिरसंशयः ॥ ११४
पालयिष्ये प्रजाश्चेति त्वया पूर्वं प्रतिश्रुतम् । तांस्तथा वादिनः सर्वान्ब्रह्मर्षीनब्रवीत्तदा ॥
स प्रहस्य तु दुर्बुद्धिरिदं वचनकोविदः । स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वै मया ॥ ११६
वीर्यश्रुततपःसत्यैर्मया वा कः समो भुवि । महात्मानमनूनं मां यूयं जानीत तत्त्वतः ॥ ११७
प्रभवः सर्वलोकानां धर्माणां च विशेषतः । इच्छन्दहेयं पृथिवीं प्लावयेयं जलेन वा ॥
सृजेयं वा ग्रसेयं वा नात्र कार्या विचारणा ॥ ११८
यदा न शक्यते स्तम्भान्मानाच्च भृशमोहितः । अनुनेतुं नृपो वेनस्ततः क्रुद्धा महर्षयः ॥ ११९
निगृह्य तं महाबाहुं विस्फुरन्तं यथाऽनलम् । ततोऽस्य वामहस्तं ते ममन्थुर्भृशकोपिताः ॥ १२०
तस्मात्प्रमथ्यमानाद्वै जज्ञे पूर्वमभिश्रुतः । ह्रस्वोऽतिमात्रं पुरुषः कृष्णश्चापि तथा द्विजाः ॥ १२१
स भीतः प्राञ्जलिश्चैव स्थितवान्व्याकुलेन्द्रियः । तमार्तं विह्वलं दृष्ट्वा निषीदेत्यब्रुवन्किल ॥
निषादवंशकर्ताऽसौ बभूवानन्तविक्रमः । धीवरानसृजत्सोऽपि वेनकल्मषसंभवान् ॥ १२३
ये चान्ये विन्ध्यनिलयास्तुम्बुरास्तुवराः खसाः । अधर्मरुचयश्चापि संभूता वेनकल्मषात् ॥
पुनर्महर्षयस्तस्य पाणिं वेनस्य दक्षिणम् । अरणीमिव संरम्भान्ममन्थुर्जातमन्यवः ॥ १२५
पृथुस्तस्मात्समुत्पन्नः करास्फालनतेजसः । पृथोः करतलाद्वाऽपि यस्माज्जातः पृथुस्ततः ॥
दीप्यमानः स्ववपुषा साक्षादग्निरिवोज्वलन् ॥ १२६
आद्यमाजगवं नाम धनुर्गृह्य महारवम् । शरांश्च बिभ्रद्रक्षार्थं कवचं च महाप्रभम् ॥ १२७
तस्मिञ्जातेऽथ भूतानि संप्रहृष्टानि सर्वशः । समुत्पन्ने महाराज्ञि वेनश्च त्रिदिवं गतः ॥ १२८
समुत्पन्नेन राजर्षिः स सत्पुत्रेण धीमता । *त्रातः स पुरुषव्याघ्रः पुन्नाम्नो नरकात्तदा ॥
तं नद्यश्च समुद्राश्च रत्नान्यादाय सर्वशः । अभिषेकाय तोयं च सर्व एवोपतस्थिरे ॥ १३०
पितामहश्च भगवानङ्गिरोभिः सहामरैः । स्थावराणि च भूतानि जङ्गमानि च सर्वशः ॥ १३१
समागम्य तदा वैन्यमभ्यषिञ्चन्नराधिपम् । महता राजराज्येन महाराजं महाद्युतिम् ॥ १३२
सोऽभिषिक्तो महाराजो देवैरङ्गिरसः सुतैः । आदिराजो महाराजः पृथुर्वैन्यः प्रतापवान् ॥
पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । ततो राजेति नामास्य अनुरागादजायत ॥ १३४
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः । पर्वताश्च विशीर्यन्ते ध्वजभङ्गश्च नाभवत् ॥ १३५

---

* एतदर्धस्थाने—"पुरुषव्याघ्रः पुंनाम्नो नरकात्त्रायते ततः" इति क. पुस्तके ।

---

१ ख. घ. ङ. नदात° । २ ख. ग. घ. ङ. °नेऽत्र प्र° । ३ ख. ग. घ. ङ. °नः पूर्वो° । ४ ख. ग. घ. ङ. °दा । वेनः प्र° । ५ ख. मन्दारमानो म्ब्रू° । ६ घ. ङ. °भवं स° । ७ ख. ग. घ. ङ. °श्रुतिः । ह° । ८ ख. ङ. पुत्रः स कृ° । ९ ख. घ. ङ. °जन्वाऽपि । १० ग. °रा बर्बराः । ११ ग. घ. ङ. °पि विद्धि सान्वेन° । १२ ख. ग. ङ. °वान् । पु° । १३ घ. स्य दक्षिण भर्णीमिव । कर प्रसृष सं° । १४ ख. ग. घ. ङ. प्रयातेतुर्महाराज वै° । १५ ख. नृपतिः । १६ ख. ग. घ. ङ. °स्तत्र प्र° ।

अकृष्टपच्या पृथिवी सिध्यन्त्यन्नानि चिन्तया । सर्वकामदुघा गावः पुटके पुटके मधु ॥ १३६
एतस्मिन्नेव काले च यज्ञे पैतामहे शुभे । सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः ॥
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ॥ १३७
[*सामगेषु तु गायत्सु स्रुग्भाण्डे वैश्वदेवके । सामगाने समुत्पन्नस्तस्मान्मागध उच्यते ]
ऐन्द्रेण हविषा चापि हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय देवेन ततः सूतो व्यजायत ॥ १३८
प्रमादस्तत्र संजज्ञे प्रायश्चित्तं च कर्मसु । शिष्यहव्येन यत्पृक्तमभिभूतं गुरोर्हविः ॥
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ॥ १३९
यच्च क्षत्रात्समभवद्ब्राह्मण्यं हीनयोनितः । सूतः पूर्वेण साधर्म्यात्तुल्यधर्मः प्रकीर्तितः ॥ १४०
मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीवनम् । रथनागाश्वचरितं जघन्यं च चिकित्सितम् ॥ १४१
पृथोस्तवार्थं तौ तत्र समाहूतौ सुरर्षिभिः । तावूचुर्मुनयः सर्वे स्तूयतामेष पार्थिवः ॥
कर्मैतदनुरूपं वां पात्रं स्तोत्रस्य चाप्ययम् ॥ १४२
तावूचतुस्तदा सर्वांस्तानृषीन्सूतमागधौ । आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥ १४३
न चास्य कर्म वै विद्मो न तथा लक्षणं यशः । स्तोत्रं येनास्य कुर्यावो राज्ञस्तेजस्विनो द्विजाः ॥
ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति । दानधर्मरतो नित्यं सत्यवाक्संजितेन्द्रियः ॥
ज्ञानशीलो वदान्यस्तु संग्रामेष्वपराजितः ॥ १४५
यानि कर्माणि कृतवान्पृथुश्चापि महाबलः । तानि शीलेन बद्धानि स्तुवद्भिः सूतमागधैः ॥
ततस्तवान्ते सुप्रीतः पृथुः प्रादात्प्रजेश्वरः । अनूपदेशं सूताय मगधान्मागधाय च ॥ १४७
तदा वै पृथिवीपालाः स्तूयन्ते सूतमागधैः । आशीर्वादैः प्रबोध्यन्ते सूतमागधवन्दिभिः ॥ १४८
तं दृष्ट्वा परमप्रीताः प्रजा ऊचुर्महर्षयः । एष वो वृत्तिदो वैन्यो भवत्विति नराधिपः ॥ १४९
ततो वैन्यं महाभागं प्रजाः समभिदुद्रुवुः । त्वं नो वृत्तिं विधत्स्वेति महर्षिवचनात्तदा ॥
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया ॥ १५०
धनुर्गृहीत्वा बाणांश्च वसुधामार्दयद्बली । अस्यार्दनभयत्रस्ता गौर्भूत्वा प्राद्रवन्मही ॥ १५१
तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत । सा लोकान्ब्रह्मलोकादीन्गत्वा वैन्यभयात्तदा ॥
ददर्श चाग्रतो वैन्यं कार्मुकोद्यतधारिणम् ॥ १५२
ज्वलद्भिर्निशितैर्बाणैर्दीप्ततेजसमच्युतम् । महायोगं महात्मानं दुर्धर्षममरैरपि ॥ १५३
अलभन्ती तदा त्राणं वैन्यमेवान्वपद्यत । कृताञ्जलिपुटा देवी पूज्या लोकैस्त्रिभिः सदा ॥
उवाच वैन्यं नाधर्मं स्त्रीवधे परिपश्यसि । कथं धारयिता चासि प्रजा राजन्मया विना ॥ १५५
मयि लोकाः स्थिता राजन्मयेदं धार्यते जगत् । मदृते च विनश्येयुः प्रजाः पार्थिवसत्तम ॥ १५६
न मामर्हसि वै हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि । प्रजानां पृथिवीपाल शृणु चेदं वचो मम ॥ १५७
उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः । हत्वाऽपि मां न शक्तस्त्वं प्रजानां पालने नृप ॥

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

१ ग. घ. ङ. °ते तु यजतस्तस्य वै प्रभो । सोमे सूतः समुत्पन्नस्ततः सौत्ये तदाऽहनि । त° । २ ख. ग. घ. ङ. °ये समुत्पन्ने पुनर्भेऽते तु भा° । ३ ख. ग. घ. ङ. °सतानां° । ४ ख. ग. ङ. °पथपाश्च चाव नराधिपः । ता° । ५ ख. घ. ङ. °मर्दे° ।

( पृथिवीदोहनम् )

अन्नभूता भविष्यामि जहि कोपं महाद्युते । अवध्याश्च स्त्रियः प्राहुस्तिर्यग्योनिगतेष्वपि ॥
सत्त्वेन पृथिवीपाल धर्मं न त्यक्तुमर्हसि ॥ १५९
एवं बहुविधं वाक्यं श्रुत्वा राजा महामनाः । क्रोधं निगृह्य धर्मात्मा वसुधामिदमब्रवीत् ॥१६०
एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा । एकं प्राणं बहून्वाऽपि कामं तस्यास्ति पातकम्
यस्मिंस्तु निहते भद्रे लभन्ते बहवः सुखम् । तस्मिन्हते शुभे नास्ति पातकं चोपपातकम् ॥१६२
सोऽहं प्रजानिमित्तं त्वां वधिष्यामि वसुंधरे । यदि मे वचनं नाद्य करिष्यसि जगद्धितम् ॥
त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीम् । आत्मानं प्रथयित्वेह धारयिष्याम्यहं प्रजाः ॥
सा त्वं वचनमासाद्य मम धर्मभृतां वरे । संजीवय प्रजा नित्यं शक्ता ह्यसि न संशयः ॥ १६५
दुहितृत्वं च मे गच्छ एवमेतं महद्दरम् । नियच्छे त्वां तु धर्मार्थे प्रयुक्तं घोरदर्शने ॥ १६६
प्रत्युवाच ततो वैन्यमेवमुक्ता सती मही । एवमेतदहं राजन्विधास्यामि न संशयः ॥ १६७
वत्सं तु मम तं यच्छ क्षरेयं येन वत्सला । समां च कुरु सर्वत्र मां त्वं धर्मभृतां वर ॥
यथा विष्यन्दमानं च क्षीरं सर्वत्र भावयेत् ॥ १६८
तत उत्सारयामास शिलाजालानि सर्वशः । धनुष्कोट्या ततो वैन्यस्तेन शैला विवर्धिताः ॥
मन्वन्तरेष्वतीतेषु विषमाऽऽसीद्वसुंधरा । स्वभावेनाभवंस्तस्याः समानि विषमाणि च ॥ १७०
न हि पूर्वविसर्गे वै विषमे पृथिवीतले । प्रविभागः पुराणां वा ग्रामाणां वाऽपि विद्यते ॥ १७१
न सस्यानि न गोरक्षा न कृषिर्न वणिक्पथः । चाक्षुषस्यान्तरे पूर्वमेतदासीत्पुरा किल ॥
वैवस्वतेऽन्तरे तस्मिन्सर्वस्यैतस्य संभवः ॥ १७२
समत्वं पुत्री यत्राऽऽसीद्भूमस्तस्मिंस्तदेव हि । तत्र तत्र प्रजास्ता वै निवसन्ति स्म सर्वदा॥ १७३
आहारः फलमूलानि प्रजानामभवत्किल । * कृच्छ्रेणैव तदा तासामित्येवमनुशुश्रुम ॥
आसीत्प्रवृत्तिर्लोकेऽस्मिन्सर्वस्यैतस्य संभवः॥ १७४
+कृच्छ्रेण महता सोऽपि प्रनष्टास्वोषधीषु वै । स कल्पयित्वा वत्सं तु चाक्षुषं मनुमीश्वरः ॥
पृथुर्दुदोह सस्यानि स्वतले पृथिवीं ततः ॥ १७५
सस्यानि तेन दुग्धानि(वै)न्येन तु वसुंधरे । मनुं च चाक्षुषं कृत्वा वत्सं पात्रे च भूमये ॥
तेनान्नेन तदा ता वै वर्तयन्ते प्रजाः सदा ॥ १७६
ऋषिभिः श्रूयते चाऽपि पुनर्दुग्धा वसुंधरा । वत्सः सोमस्त्वभूत्तेषां दोग्धा चापि बृहस्पतिः॥
पात्रमासीत्तु च्छन्दांसि गायत्र्यादीनि सर्वशः । क्षीरमासीत्तदा तेषां तपो ब्रह्म च शाश्वतम् ॥
पुनः स्तुत्वा देवगणैः पुरंदरपुरोगमैः । सौवर्णं पात्रमादाय अमृतं दुदुहे तदा ॥
तेनैव वर्तयन्ते च देवा इन्द्रपुरोगमाः ॥ १७९

* इदमर्धं नास्ति क. पुस्तके । + इदमर्धं नास्ति ख. ग. घ. ङ. पुस्तकेषु ।

१ घ. °पि । न चेन्यप्° । २ ख. ङ. °हे एधन्ते । ३ घ. ङ. ° प्रजा धारयिता ह्ययम् । सा । ४ ग घ. ङ. °त्वेय त्वप° । ५ ग. घ. ङ. °हनम् । प्र° । ६ ग. घ. ङ. पत्य । ७ ख. ग. घ. °न मे क्षी° । ८ क. °ये । त° । ९ घ. हि सर्गवस° । १० ख. घ. °थिवीतल । स° । ११ क. °राम् । म° । १२ ख. ग. घ. ङ. भूतले । १३ ख घ. ङ. °नस्ततो दे° । १४ ख. °व सुधाक्षीरं तदाऽभवत् । तेषा ग. °व दुग्धा पृथ्वी सुधापयः । सदाणे. पुनर्दुह्यते च वसुधरा । अन्यपुस्तकमादाय रिति । घ. ङ. °द हि ।

( पृथुवंशानुकीर्तनम् )

एवंप्रभावो राजाऽऽसीद्वैन्यः स नृपसत्तमः । नमस्यश्चैव पूज्यश्च भूतग्रामेण सर्वशः ॥ ५
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः । पृथुरेव नमस्कार्यो ब्रह्मयोनिः सनातनः ॥ ६
पार्थिवैश्च महाभागैः प्रार्थयद्भिर्महद्यशः । आदिराजा नमस्कार्यः पृथुर्वैन्यः प्रतापवान् ॥ ७
योधैरपि च सङ्ग्रामे प्रार्थयानैर्जयं युधि । आदिकर्ता नराणां वै नमस्यः पृथुरेव हि ॥ ८
यो हि योद्धा रणं याति कीर्तयित्वा पृथुं नृपम् । स घोररूपे सङ्ग्रामे क्षेमी तरति कीर्तिमान्॥
वैश्यैरपि च राजर्षिर्वैश्यवृत्तिमुपास्थितैः । पृथुरेव नमस्कार्यो वृत्तिदाता महायशाः ॥ १०
एते वत्सविशेषाश्च दोग्धारः क्षीरमेव च । पात्राणि च मयोक्तानि सर्वाण्येव यथाक्रमम् ॥ ११
ब्रह्मणा प्रथमं दुग्धा पुरा पृथ्वी महात्मना । वायुं कृत्वा तदा वत्सं बीजानि वसुधातले॥ १२
ततः स्वायंभुवे पूर्वं तदा मन्वन्तरे पुनः । वत्सं स्वायंभुवं कृत्वा दुधौऽऽसीद्भिग वै मही ॥
मनौ स्वारोचिषे दुग्धा मही चैत्रेण धीमता । [* मनुं स्वारोचिषं कृत्वा वत्सं सस्यानि वै पुरा
उत्तमेऽनुत्तमेनापि दुग्धा देवभुजेन तु । मनुं कृत्वोत्तमं वत्सं सर्वसस्यानि धीमता ॥ ] १५
पुनश्च पञ्चमे पृथ्वी तामसस्यान्तरे मनोः । दुग्धेयं तामसं वत्सं कृत्वा तु बलबन्धुना ॥ १६
चारिष्णवस्य देवस्य संप्राप्ते चान्तरे मनोः । दुग्धा मही पुराणेन वत्सं चारिष्णवं प्रति ॥ १७
चाक्षुषेऽपि च संप्राप्ते तदा मन्वन्तरे पुनः । दुग्धा मही पुराणेन वत्सं कृत्वा तु चाक्षुषम् ॥ १८
चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः । वैन्येनेयं मही दुग्धा यथा ते कीर्तितं मया ॥ १९
एतैर्दुग्धा पुरा पृथ्वी व्यतीतेष्वन्तरेषु वै । देवादिभिर्मनुष्यैश्च तथा भूतादिभिश्च या ॥ २०
( +एवं सर्वेषु विज्ञेया ह्यतीतानागतेष्विह । देवा मन्वन्तरेष्वस्य पृथोस्तु शृणुत प्रजाः ॥ २१
पृथोस्तु पुत्रौ विक्रान्तौ जज्ञातेऽन्तर्धिपालिनौ । शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत ॥ २२
हविर्धानात्षडाग्नेयी धिषणाऽजनयत्सुतान् । प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥ २३
प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः । बलश्रुततपोवीर्यैः पृथिव्यामेकराड्वशी ॥
प्राचीनाग्राः कुशास्तस्य तस्मात्प्राचीनबर्ह्यसौ ॥ २४
समुद्रतनयायां तु कृतदारः स वै प्रभुः । महतस्तपसः पारे सवर्णायां प्रजापतिः ॥
सवर्णाऽधत्त सामुद्री दश प्राचीनबर्हिषः ) ॥ २५
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः । अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः ॥
दश वर्षसहस्राणि समुद्रसलिलेशयाः ॥
तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः । अरक्ष्यमाणाः खं वव्रुर्बभूवाथ प्रजाक्षयः ॥ २७
प्रत्याहते तदा तस्मिंश्चाक्षुषस्यान्तरे मनोः । नाशकन्मारुतो वातुं वृतं खमभवद्द्रुमैः ॥
दश वर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ २८
तदुपश्रुत्य तपसा सर्वे युक्ताः प्रचेतसः । मुखेभ्यो वायुमग्निं च ससृजुर्जातमन्यवः ॥ २९

---

* मनुस्विहान्तर्गतग्रन्थो ङ. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति ।

---

१ घ. 'र्थयद्भिर्जं' । २ ख. ग. घ ङ. 'रूपान्संग्रामान्क्षेमी°' । ३ क 'यथा प्रत्येन' । ४ ख. घ. 'रो स विपाविनौ । शि' । ५ ग. घ 'नद्विश पु' । ६ ख. ग घ '°कं गाय कृष्णं प्रताजि' । ७ क. पोः । सं° । ८ ख. ग घ. '°श्चोऽस्त' । ९ ख ग ङ सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः । अ । १० ख. ग घ. ङ. 'थ पृथक्देशेषु चारम प्र° । ११ क 'ममा भाव°' ।

उन्मूलानथ तान्वृक्षान्कृत्वा वायुरशोषयत् । तानग्निरदहद्घोर एवमासीद्द्रुमक्षयः ॥ ३०
द्रुमक्षयमथो बुद्ध्वा किंचिच्छेषेषु शाखिषु । उपगम्याब्रवीदेतान्राजा सोमः प्रचेतसः ॥ ३१
दृष्ट्वा प्रयोजनं सर्वं लोकसंतानकारणात् । कोपं त्यजत राजानः सर्वे प्राचीनबर्हिषः ॥ ३२
वृक्षाः क्षित्यां जनिष्यन्ति शाम्येतामग्निमारुतौ । रत्नभूता तु कन्येयं वृक्षाणां वरवर्णिनी ॥ ३३
भविष्यं जानता ह्येषा मया गोभिर्विवर्धिता । मारिषा नाम नाम्नैषा वृक्षैरेव विनिर्मिता ॥
भार्या भवतु वो ह्येषा सोमगर्भविवर्धिता ॥ ३४
युष्माकं तेजसोऽर्धेन मम चार्धेन तेजसः । अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः ॥ ३५
स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै । अग्निनाऽग्निसमो भूयः प्रजाः संवर्धयिष्यसि ॥ ३६
ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः । संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम् ॥ ३७
मारिषायां ततस्ते वै मनसा गर्भमादधुः । दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ॥ ३८
दक्षो जज्ञे महातेजाः सोमस्यांशेन वीर्यवान् । असृजन्मनसा चाऽऽदौ प्रजा दक्षो न मैथुनात् ॥ ३९
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः । विसृज्य मनसा दक्षः पश्चादसृजत स्त्रियः ॥ ४०
ददौ स दश धर्माय कश्यपाय त्रयोदश । कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ ४१
एभ्यो दत्त्वा ततोऽन्या वै चतस्रोऽरिष्टनेमिने । द्वे चैव बाहुपुत्राय द्वे चैवाङ्गिरसे तथा ॥
कन्यामेकां कृशाश्वाय तेभ्योऽपत्यं निबोधत ॥ ४२
अन्तरं चाक्षुषस्यात्र मनोः षष्ठं तु हीयते । मनोर्वैवस्वतस्यापि सप्तमस्य प्रजापतेः ॥ ४३
तासु देवाः खगा गावो नागा दितिजदानवाः । गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥
ततः प्रभृति लोकेऽस्मिन्प्रजा मैथुनसंभवाः । संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ॥ ४५

ऋषय ऊचुः—

देवानां दानवानां च देवर्षीणां च ते शुभः । संभवः कथितः पूर्वं दक्षस्य च महात्मनः ॥ ४६
प्राणात्प्रजापतेर्जन्म दक्षस्य कथितं त्वया । कथं प्राचेतसत्वं च पुनर्लेभे महातपाः ॥ ४७
एतं नः संशयं सूत व्याख्यातुं त्वमिहार्हसि । स दौहित्रश्च सोमस्य कथं श्वशुरतां गतः ॥ ४८

सूत उवाच—

उत्पत्तिश्च निरोधश्च नित्यं भूतेषु सत्तमाः । ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये नराः ॥ ४९
युगे युगे भवन्त्येते सर्वे दक्षादयो द्विजाः । पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥ ५०
ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीद्द्विजोत्तमाः । तप एव गरीयोऽभूत्प्रभावश्चैव कारणम् ॥ ५१
इमां विसृष्टिं यो वेद चाक्षुषस्य चराचरम् । प्रजानामायुरुत्तीर्णः स्वर्गलोके महीयते ॥ ५२
एष सर्गः समाख्यातश्चाक्षुषस्य समासतः । इत्येते षट् विसर्गा हि क्रान्ता मन्वन्तरात्मकाः ॥
स्वायंभुवाद्याः संक्षेपाच्चाक्षुषान्ता यथाक्रमम् ॥ ५३
एते सर्गा यथापूर्वं प्रोक्ता वै द्विजसत्तमाः । वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः ॥ ५४

---

१ ग. घ. ङ. °ङ्रेदारुणा° । २ घ. ङ. °विष्यज्जानता ह्येषा पूता गर्भेण वै मया । गो° । ३ ग. घ. ङ. तेजसा । ४ ग. घ. ङ. °ष्टां । स° । ५ ङ. °ग्निनाग्निसमो° । ६ ङ. °स्रोऽरिष्ट° । ७ ङ. °पपात् । हि° । ८ ख. ग. सृष्टौ । ९ ग. घ. ङ. °वो मुदा° । १० घ. °ति वेदस° । ११ ग. घ. ङ. पूर्वसर्गा° । १२ ग. °तो यथा° । [illegible]

अनन्ता नातिरिक्ताश्च सर्वे सर्गा विवस्वतः। आरोग्यायुः प्रमाणेन धर्मतः कामतोऽर्थतः॥
एतानेव गुणानेति यः पठत्यनसूयकः॥ ९९
वैवस्वतस्य वक्ष्यामि सांप्रतस्य महात्मनः। समासाद्व्यासतः सर्गं ब्रुवतो मे निबोधत॥ ९६

इति श्रीमहापुराणे वायुप्रोक्ते पृथुवंशानुकीर्तनं नाम त्रिषष्टितमोऽध्यायः॥ ६३॥

आदितः श्लोकानां समष्ट्यङ्काः—५३३५

---

अथ चतुःषष्टितमोऽध्यायः।

---

वैवस्वतसर्गवर्णनम्।

सूत उवाच—
सप्तमे त्वथ पर्याये मनोर्वैवस्वतस्य ह। मारीचात्कश्यपाद्देवा जज्ञिरे परमर्षयः॥ १
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः। भृगवोऽङ्गिरसश्चैव ह्यष्टौ देवगणाः स्मृताः॥
आदित्या मरुतो रुद्रा विज्ञेयाः कश्यपात्मजाः। साध्याश्च वसवो विश्वे धर्मपुत्रास्त्रयो गणाः
भृगोस्तु भार्गवो देवो ह्यङ्गिरोऽङ्गिरसः सुतः। वैवस्वतेऽन्तरे ह्यस्मिन्नित्यं ते छन्दजाः सुराः॥
*एतेऽपि च गमिष्यन्ति महतः कालपर्ययात्॥
एष मार्गस्तु मारीचो विज्ञेयः सांप्रतः शुभः। तेजस्वी सांप्रतस्तेषामिन्द्रो नाम्ना महाबलः॥
अतीतानागता ये च वर्तन्ते ये च सांप्रतम्। सर्वे मन्वन्तरेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः॥ ६
भूतभव्यभवन्नाथाः सहस्राक्षाः पुरंदराः। मघवन्तश्च ते सर्वे शृङ्गिणो वज्रपाणयः॥
सर्वैः क्रतुशतेनेष्टं पृथक्शतगुणेन तु॥ ७
त्रैलोक्ये यानि सत्त्वानि गतिमन्त्यचलानि च। अभिभूयावतिष्ठन्ते धर्माद्यैः कारणैरपि॥ ८
तेजसा तपसा बुद्ध्या बलश्रुतपराक्रमैः। भूतभव्यभवन्नाथा यथा ते प्रभविष्णवः॥
एतत्सर्वं प्रवक्ष्यामि ब्रुवतो मे निबोधत॥ ९
भूतं भव्यं भविष्यं तत्स्मृतं लोकत्रयं द्विजैः। भूर्लोकोऽयं स्मृतो भूमिरन्तरिक्षं भुवं स्मृतम्॥
भव्यं स्मृतं दिवं ह्येतत्तेषां वक्ष्यामि साधनम्॥ १०
ध्यायता पुत्रकामेण ब्रह्मणाऽग्रे विभावितम्। भूरिति व्याहृतं पूर्वं भूर्लोकोऽयमभूत्तदा॥ ११
भूसत्तायां स्मृतो धातुस्तथाऽसौ लोकदर्शने। भूतत्वाद्दर्शनत्वाच्च भूर्लोकोऽयमभूत्ततः॥
अतोऽयं प्रथमो लोको भूतत्वाद्भूर्द्विजैः स्मृतः॥ १२
भूतेऽस्मिन्भवदित्युक्तं द्वितीयं ब्रह्मणा पुनः। भवत्युत्पद्यमानेन कालशब्दोऽयमुच्यते॥ १३
भवनात्तु भुवर्लोको निरुक्तज्ञैर्निरुच्यते। अन्तरिक्षं भुवस्तस्माद्द्वितीयो लोक उच्यते॥ १४
उत्पन्ने तु भुवर्लोके तृतीयं ब्रह्मणा पुनः। भव्येति व्याहृतं यस्माद्भव्यो लोकस्तदाऽभवत्॥
अनागते भव्य इति शब्द एष विभाव्यते। तस्माद्भव्यो ह्यसौ लोको नामतस्तु दिवं स्मृतम्॥
स्वरित्युक्तं तृतीयोऽन्यो भाव्यो लोकस्तदाऽभवत्। भाव्य इत्येष धातुर्वै भाव्ये काले विभाव्यते

---

* इदमर्धं नास्ति क पुस्तके

---

१ घ. ङ. 'सर्गं तु'। २ ग ङ. 'वै परं'। ३ ग व्याहृते पू'। ४ घ. 'दैनात्वे भू'। ५ ग. घ. ङ. 'भाव्यते।

भूरितीयं स्मृता भूमिरन्तरिक्षं भुवं स्मृतम् । दिवं स्मृतं तथा भाव्यं त्रैलोक्यस्यैष संग्रहः ॥ १८
त्रैलोक्ययुक्तैर्व्याहारैरितिस्रो व्याहृतयोऽभवन् । नाथ इत्येष धातुर्वै धातुज्ञैः पालने स्मृतः ॥
यस्माद्भूतस्य लोकस्य भव्यस्य भवतस्तदा । लोकत्रयस्य नाथास्ते तस्मादिन्द्रा द्विजैः स्मृताः
प्रधानभूता देवेन्द्रा गुणभूतास्तथैव च । मन्वन्तरेषु ये देवा यज्ञभाजो भवन्ति हि ॥ २१
यक्षगन्धर्वरक्षांसि पिशाचोरगदानवाः । महिमानः स्मृता ह्येते देवेन्द्राणां तु सर्वशः ॥ २२
देवेन्द्रा गुरवो नाथा राजानः पितरो हि ते । रक्षन्तीमाः प्रजाः सर्वा धर्मेणेह सुरोत्तमाः ॥
इत्येतल्लक्षणं प्रोक्तं देवेन्द्राणां समासतः । सप्तर्षीन्संप्रवक्ष्यामि सांप्रतं ये दिवि स्थिताः ॥ २४
गाधिजः कौशिको धीमान्विश्वामित्रो महातपाः । भार्गवो जमदग्निश्च ऊरुपुत्रः प्रतापवान् ॥
बृहस्पतिसुतश्चापि भारद्वाजो महातपाः । औतथ्यो गौतमो विद्वाञ्शरद्वान्नाम धार्मिकः ॥ २६
स्वायंभुवोऽत्रिर्भगवान्ब्रह्मकोशस्तु पञ्चमः । षष्ठो वसिष्ठपुत्रस्तु वसुमाँल्लोकविश्रुतः ॥ २७
वत्सारः काश्यपश्चैव सप्तैते साधुसंमताः । एते सप्तर्षयः सिद्धा वर्तन्ते सांप्रतेऽन्तरे ॥ २८
इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च । नरिष्यन्तश्च विख्यातो नाम उद्दिष्ट एव च ॥ २९
करूषश्च पृषध्रश्च वसुमाञ्नवमः स्मृतः । मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्तिताः ॥
कीर्तिता वै मया ह्येते · सप्तं चैतदन्तरम् ॥ ३०
इत्येषं वै मया पादो द्वितीयः कथितः द्विजाः । विस्तरेणाऽऽनुपूर्व्या च भूयः किं वर्णयाम्यहम्

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतसर्गवर्णनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५३६६

## इत्यनुषङ्गपादो द्वितीयः ।

## अथोपोद्घातपादस्तृतीयः ।

अथ पञ्चषष्टितमोऽध्यायः ।

प्रजापतिवंशानुकीर्तनम् ।

ऋषय ऊचुः —
श्रुत्वा पादं द्वितीयं तु क्रान्तं सूतेन धीमता । अतस्तृतीयं पप्रच्छ पादं वै शांशपायनः ॥ १
पादः क्रान्तो द्वितीयोऽयमनुषङ्गेण यस्त्वया । तृतीयं विस्तरात्पादं सोपोद्घातं प्रकीर्तय ॥
एवमुक्तोऽब्रवीत्सूतः प्रहृष्टेनान्तरात्मना ॥ २

सूत उवाच—
कीर्तयिष्ये तृतीयं च सोपोद्घातं सविस्तरम् । पादं समुदयाद्विप्रा गदतो मे निबोधत ॥ ३
मनोर्वैवस्वतस्येमं सांप्रतस्य महात्मनः । विस्तरेणाऽऽनुपूर्व्या च निसर्गं शृणुत द्विजाः ॥ ४
चतुर्युगैकसप्तत्या संख्यातः पूर्वमेव तु । सह देवगणैश्चैव ऋषिभिर्दानवैः सह ॥ ५

१ ग. घ. यथेरो'। २ ख. घ. ङ. 'त्याक्षमा' म'। ३ क. 'ष्टो वाकि'। ४ घ. ङ. यविष्ठ'। ५ क. ग. घ. ङ. 'र्यातिरप्यथ रि'। ६ ग. घ. ङ. नाभागोरिष्ट। ७ क. ग. घ. ङ. 'ष प्रांशुश्च'। ८ ख. घ. ङ. 'श्च मो म'।

सप्तर्षयस्तथैवोर्ध्वमाधुवात्सप्तमस्तु यः। वातस्कन्धः परिवहस्तत्र तिष्ठन्तु मे सुताः॥ १२०
एतत्सर्वं चरन्त्येते काले काले ममाऽऽत्मजाः। त्वत्कृतेन च नाम्ना वै भवन्तु मरुतस्त्विमे॥
ततस्तेषां तु नामानि मातापुत्रौ प्रचक्रतुः। तत्कृते कर्मभिश्चैव मरुतो वै पृथक्पृथक्॥ १२२
सत्त्वज्योतिस्तथाऽऽदित्यः सत्यज्योतिस्तथाऽपरः। तिर्यग्ज्योतिश्च सज्योतिर्ज्योतिष्मानपरस्तथा
प्रथमस्तु गणः प्रोक्तो द्वितीयं मे निबोधत। ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा॥ १२४
सत्यमित्रोऽभिमित्रश्च हरिमित्रस्तथाऽपरः। गण एष द्वितीयस्तु तृतीयं मे निबोधत॥ १२५
ऋतः सत्यो ध्रुवो धर्ता विधर्ताऽथ विधारयः। ध्वान्तश्चैव धुनिश्चैव ह्युग्रो भीमस्तथैव च॥
अभियुः साक्षिपश्चैवमाह्वयश्च गणः स्मृतः॥ १२६
ईदृक्चैव तथाऽन्यादृग्यादृक्च प्रतिकृत्तथा। ऋक्तथा समितिश्चैव संरम्भश्च तथा गणः॥ १२७
ईदृक्च पुरुषश्चैव अन्यादृक्षाश्च चेतसः। समितासमिदृक्षाश्च प्रतिदृक्षाश्च वै गणाः॥ १२८
(+मरुतिद्रसरंतश्चैव तथा देवो दिशोऽपरः। यजुश्चैवानुदृक्सामस्तथाऽन्यो मानुषीविशः॥
दैत्या देवाः समाख्याताः सप्तैते सप्तका गणाः॥) १२९
एते ह्येकोनपञ्चाशन्मरुतो नामतः स्मृताः। प्रसंख्यातास्तथा ताभ्यां दित्या चेन्द्रेण चैव हि १२९
कृत्वा तेषां तु नामानि दितिरिन्द्रमुवाच ह। वातस्कन्धं चरन्त्वेते मम पुत्राश्च पुत्रक॥
विचरन्तु च भद्रं ते देवैः सह ममाऽऽत्मजाः॥ १३०
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः। उवाच प्राञ्जलिर्भूत्वा मातर्भवतु तत्तथा॥ १३१
सर्वमेतद्यथोक्तं ते भविष्यति न संशयः। देवभूता महात्मानः कुमारा देवसंमताः॥
देवैः सह भविष्यन्ति यज्ञभाजस्तवाऽऽत्मजाः॥ १३२
तस्माच्चे मरुतो देवाः सर्वे चेन्द्रानुजामराः। विज्ञेयाश्चामराः सर्वे दितिपुत्रास्तपस्विनः॥ १३३
एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोधनौ। जग्मतुस्त्रिदिवं हृष्टौ शक्रोऽपि त्रिदिवं गतः॥ १३४
मरुतां हि शुभं जन्म शृणुयाद्यः पठेत वा। नाव्याप्तिभयमाप्नोति बह्वायुश्च भवत्युत॥ १३५

इति श्रीमहापुराणे वायुप्रोक्त उपोद्घातपादे कश्यपीयप्रजासर्गो नाम सप्तषष्टितमोऽध्यायः॥ ६७॥

आदितः श्लोकानां समष्ट्यङ्काः—६२१२

अथाष्टषष्टितमोऽध्यायः।

कश्यपीयप्रजासर्गः।

सूत उवाच—
अत ऊर्ध्वं प्रवक्ष्यामि दनुपुत्रान्निबोधत। अभवन्दनुपुत्रास्तु वंशे ख्याता महासुराः॥ १

+ धनुश्चिह्नान्तर्गतग्रन्थः क ख पुस्तकयोर्नास्ति।

१ क. जा.। सप्त ते। २ ख. घ. ङ. सत्त्वज्योति। ३ ग. ङ. धतुर्ज्योतिर्ज्यो। ४ ख. घ. ध्यानुहरितस्त। ५ घ. मित्रधामित्रश्च दूरेमि। ६ ग ङ. श्रो धामित्रश्च दूरे मि। ७ क. कृतः। ८ ख. ग. ङ. न्तश्च धुनितश्चै। ९ क. ,धा। दृश्यता। १० क. घ. गुणा। ११ ग. ङ. रम्भस्तथा। १२ क. ध्रुवा १३ क. स्तथा ऽऽत्म। १४ ख. घ. ङ. र्वे प्रीतिपु। १५ क शास्त्रा। १६ ग. श्चौ रिपुधाभूतज्वर। म। १७ ख. घ. ङ. वाक्धाभूतज्वरः। म। १८ घ. ख्याताः तहयग। वि।

(कश्यपीयप्रजासर्ग.)

विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः । सर्वे लब्धवराश्चैव सुतप्ततपसस्तथा ॥ २
सत्यसंधाः पराक्रान्ताः क्रूरा मायाविनश्च ते । महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः ॥
कीर्त्यमानान्मया सर्वान्प्राधान्येन निबोधत ॥ ३
द्विमूर्धा शङ्कुकर्णश्च तथा शङ्कुर्निरामयः । शङ्कुकर्णो महाविश्वो गवेष्ठिर्दुन्दुभिस्तथा ॥ ४
अजामुखोऽथ भगवाञ्शिलो वामनसस्तथा । मरीचिरक्षकश्चैव महागार्ग्योऽङ्गिराहृतः ॥ ५
विक्षोभ्यश्च सुकेतुश्च सुवीर्यः सुहृदस्तथा । इन्द्रजिद्विश्वजिच्चैव तथा सुरविमर्दनः ॥ ६
एकचक्रः सुबाहुश्च तारकश्च महाबलः । वैश्वानरः पुलोमा च प्रवीणोऽथ महाशिराः ॥ ७
स्वर्भानुर्वृषपर्वा च मुण्डकश्च महासुरः । धृतराष्ट्रश्च सूर्यश्च चन्द्र इन्द्रश्च तापिनः ॥ ८
सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः । असिलोमा सुकेशश्च सदश्च बलको दश ॥ ९
तथा गगनमूर्धा च कुम्भनाभो महोदरः । प्रमोदाहश्च कुपथो हयग्रीवश्च वीर्यवान् ॥ १०
असुरश्च विरूपाक्षः सुपथोऽथ महासुरः । अजो हिरण्मयश्चैव शतमायुश्च शम्बरः ॥ ११
शरभः शलभश्चैव सूर्याचन्द्रमसावुभौ । असुराणां सुरावेतौ सुराणां सामवाविमौ ॥ १२
इति पुत्रा दनोर्वंशे प्रधानाः परिकीर्तिताः । तेषामपरिसंख्येयं पुत्रपौत्राद्यनन्तकम् ॥ १३
इत्येते ह्यसुराः प्रोक्ता दैतेया दानवाश्च ये । स्वर्भानुस्तु स्मृतो दैत्यो ह्यनुभानुर्दनोः सुतः ॥
इमे तु वंशानुगता दनोः पुत्रास्तु ये स्मृताः ॥ १४
एकाक्ष ऋषभोऽरिष्टः प्रलम्बनरकावपि । इन्द्रबाधनकेशी च मेरुः शंबोऽथ धेनुकः ॥ १५
गवेष्ठिश्च गवाक्षश्च तालकेतुश्च वीर्यवान् । एते मनुष्यधर्माणस्तु दनोः पुत्रा मया स्मृताः ॥ १६
दैत्यदानवसंघर्षे जाता भीमपराक्रमाः । सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्त्विमे ॥ १७
सैंहिकेया इति ख्याताश्चतुर्दश महासुराः । शंखनालश्च बलवाव्यासः शाम्बस्तथैव च ॥ १८
+ अनुलोमः शुचिश्चैव वातापिश्च सितांशुकः । हरकल्पः कालनाभो भौमश्च नरकस्तथा ॥ १९
राहुर्ज्येष्ठस्तु तेषां वै चन्द्रसूर्यप्रमर्दनः । इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ॥ २०
दारुणाभिजनाः क्रूराः सर्वे ब्रह्मद्विषश्च ते । दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः ॥
निहतो जामदग्न्येन भार्गवेण बलीयसा । स्वर्भानोस्तु प्रभा कन्या पुलोम्नोऽथ शची सुता ॥
उपदानवीमयस्यापि शर्मिष्ठा वार्षपर्वणी । पुलोमा कालिका चैव वैश्वानरसुते उभे ॥ २३
प्रभायां नहुषः पुत्रो जयन्तश्च शचीसुतः । पुरुं जज्ञेऽथ शर्मिष्ठा दुष्यन्तमुपदानवी ॥ २४
वैश्वानरसुते द्वेते पुलोमाकालिके उभे । उभे ह्यपि तु ते कन्ये मारीचस्य परिग्रहे ॥ २५

+ एतदर्धस्थान इदमर्धं ख. ग. घ. ङ. पुस्तकेषु 'इल्वला नमुचिश्चैव वातापी दमृयात्मकः' इति ।

१ ख. ङ. सत्यसत्या प । घ. सत्याः सत्यप । २ ख. घ. ङ. दें । ३ ख. घ. ङ. 'लाश्च य°' । ४ ख. 'ङ्कुर्निरावयः ५ ख. ङ. '[illegible] मथवानशिरो वामनस्त' । ६ घ. °चिरिक्षवश्चै° । [illegible]. विरिक्षि' । ७ घ. ङ. 'गार्ग्य-महाशिराः । स्व' । ११ ख. घ. ङ. च तुम्ड° । १२ ख. ग. ङ. उर्णाना° । १३ घ. °म्भमानो म° । १४ ग. 'नादो म' । १५ ग. प्रमोदोह' । [illegible]. ङ. प्रमदोद' । १६ घ 'मोदोह' । १७ ग. ङ. 'ताः । एषा । १८ ख. ग. घ. ङ. 'पौत्रमन' । १९ ङ. प्रपन्नयन° । २० ख. घ. ङ. °पन्यास्तु । २१ घ °स्तु दनो पुत्रास्त्रयः स्मृ° । २२ ङ. ख. घ. °सहर्ष । २३ ग. ख. 'तशाल' । २४ ङ. हरः क° । २५ घ. ङ. 'भीमयशा° ।

ताभ्यां पुत्रसहस्राणि षष्टिर्दानवपुङ्गवाः । चतुर्दश तथाऽन्यानि हिरण्यपुरवासिनाम् ॥ २६
पौलोमाः कालकेयाश्च दानवाः सुमहाबलाः । अवध्या देवतानां ते निहताः सव्यसाचिना ॥
मयस्य जाता ये पुत्राः सर्वे वीरपराक्रमाः । मायावी दुन्दुभिश्चैव वृषश्च महिषस्तथा ॥ २८
बालिको वज्रकर्णश्च कन्या मन्दोदरी तथा । दैत्यानां दानवानां च सर्ग एष प्रकीर्तितः ॥२९

दनायुषायाः पुत्रास्तु स्मृताः पञ्च महाबलाः । अरूरुर्बलिजन्मौ च विरक्षश्च विपस्तथा ॥ ३०
अरूरोस्तनयः क्रूरो धुन्धुर्नाम महासुरः । निहतः कुवलाश्वेन उत्तङ्कवचनात्किल ॥ ३१
बलेः पुत्रौ महावीर्यौ तेजसाऽप्रतिमावुभौ । कुम्भिलश्चक्रवर्मा च स कर्णः पूर्वजन्मनि ॥ ३२
विरक्षस्यापि पुत्रौ द्वौ कालकश्च वरश्च तौ । विपस्य त्वभवन्पुत्राश्चत्वारः क्रूरकर्मिणः ॥
श्राद्धहा यज्ञहा चैव ब्रह्महा पशुहा तथा ॥ ३३
क्रान्ता दनायुषापुत्रा वृत्रस्यापि निबोधत । जज्ञिरे श्वसनाद्घोराद्वृत्रस्येन्द्रेण युध्यतः ॥ ३४
भर्तारो मनसा ख्याता राक्षसाः सुमहाबलाः । शतं तानि सहस्राणि महेन्द्रानुचराः स्मृताः ॥
सर्वे ब्रह्मविदः सौम्या धार्मिकाः सूक्ष्ममूर्तयः । प्रजास्वन्तर्गताः सर्वे निवसन्ति सुधार्मिकाः ॥
दैत्यानां दानवानां च सर्ग एष प्रकीर्तितः । प्रवाह्यजनयत्पुत्रान्यज्ञे वै गायनोत्तमान् ॥ ३७
सत्वनः सत्त्वात्मकश्चैव कलापश्चैव वीर्यवान् । कृतवीर्यो ब्रह्मचारी सुपाण्डुश्चैव सप्तमः ॥ ३८
पनश्चैव तरणश्च सुचन्द्रो दशमस्तथा । इत्येते देवगन्धर्वा विज्ञेयाः परिकीर्तिताः ॥ ३९

इति श्रीमहापुराणे वायुप्रोक्त उपोद्घातपादे कश्यपीयप्रजासर्गो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६१६१

---

अथ नवषष्टितमोऽध्यायः ।

---

कश्यपीयप्रजासर्गः ।

सूत उवाच—

गन्धर्वाप्सरसः पुण्या मौनेयाः परिकीर्तिताः । चित्रसेनोग्रसेनश्च ऊर्णायुरनघस्तथा ॥ १
धृतराष्ट्रः पुलोमा च सूर्यवर्चास्तथैव च । युगपत्तृणपत्कालिर्दितिश्चित्ररथस्तथा ॥ २
त्रयोदशो भ्रमिशिराः पर्जन्यश्च चतुर्दशः । कलिः पञ्चदशश्चैव नारदश्चैव षोडशः ॥
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ३
चतुस्त्रिंशद्यवीयस्यस्तेषामप्सरसः शुभाः । अन्तरा दारवत्या च मिश्रमुख्या सुरोत्तमा ॥ ४
मिश्रकेशी तथा चाशी पर्णिनी वाऽप्यलम्बुषा । मारीची पुत्रिका चैव विद्युद्वर्णा तिलोत्तमा ॥
अद्रिका लक्षणा चैव देवी रम्भा मनोरमा । सुवरा च सुबाहुश्च पूर्णिता सुप्रतिष्ठिता ॥ ६
पुण्डरीका सुगन्धा च सुदन्ता सुरसा तथा । हेमा शारद्वती चैव सुवृत्ता कमला च या ॥ ७

---

१ ख. घ. ङ. °ता हेमायाः पुत्राः पञ्चमहाबला । मा° । २ घ °लाश्चित्रा च । ३ ङ. °व तुर° । ४ ग. ङ. °न्यर्या: प्रार्थनाः । ५ ग. °दशः शाशिशिराः । ङ. दश शाशिर्शि° । ६ घ. °यो अलिशि° । ७ ख. °ता° । त्रयशि° । ८ घ. °भा । ख्यन्तवाद्यारवत्या च । ९ ख °न्तवा दारवत्या च । घ. °न्तवा दारवाया च । १० ग °वशिष्या मु° । ११ ग मिश्रके° । १२ ग पर्णिनी । घ पात्नी । १३ घ. ङ °म्बुषा । मा° । १४ ख ङ. °ची पुत्रिका । १५ ग. °हेमारा मु° । १६ ख. °सुवृत्ता क° । १७ ग °ष्ण °या ।

( कश्यपीयप्रजासर्गः )

सुभुजा हंसपादा च लौकिक्योऽप्सरसस्तथा । गन्धर्वाप्सरसो ह्येता मौनेयाः परिकीर्तिताः ॥८
गन्धर्वाणां दुहितरो मया याः परिकीर्तिताः । (*तासां नामानि सर्वासां कीर्त्यमानानि मे शृणु ॥
सुयशा प्रथमा तासां गान्धर्वी तदनन्तरम् । विद्यावती चारुमुखी सुमुखी च वरानना ) ॥ १०
तत्रेमे सुयशापुत्रा महाबलपराक्रमाः । प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ॥ ११
कम्बलो हरिकेशश्च कपिलः काञ्चनस्तथा । मेघमाली तु यक्षाणां गण एष उदाहृतः ॥ १२
सुयशाया दुहितरश्चतस्रोऽप्सरसः स्मृताः । तासां नामानि वै सम्यग्ब्रुवतो मे निबोधत ॥ १३
लोहेयी त्वभवज्ज्येष्ठा भरता तदनन्तरम् । कृशाङ्गी च विशाला च रूपेणाप्रतिमा तथा ॥ १४
ताभ्योऽपरे यक्षगणाश्चत्वारः परिकीर्तिताः । उत्पादिता विशालेन विक्रान्तेन महात्मना ॥
लौहेया भरतेयाश्च कृशाङ्गेयाश्च विश्रुताः । विशालेयाश्च यक्षाणां पुराणे प्रथिता गणाः ॥ १६
इत्येतैरसुरैर्घोरैर्महाबलपराक्रमैः । नैकैर्यक्षगणैर्व्याप्ता लोका लोकविदां वराः ॥ १७
गन्धर्वाश्चाथ वालेया विक्रान्तेन महात्मना । उत्पादिता महावीर्या महागन्धर्वनायकाः ॥ १८
विक्रमौदार्यसंपन्ना महाबलपराक्रमाः । तेषां नामानि वक्ष्यामि यथावदनुपूर्वशः ॥ १९
चित्राङ्गदो महावीर्यश्चित्रवर्मा तथैव च । चित्रकेतुर्महाभागः सोमदत्तोऽथ वीर्यवान् ॥
तिस्रो दुहितरश्चैव तासां नामानि वक्ष्यते ( मे शृणु ) ॥ २०
प्रथमा त्वम्बिका नाम कम्बला तदनन्तरम् । तथा वसुमती नाम रूपेणाप्रतिमौजसः ॥ २१
ताभ्यः परे कुमारेण गणा उत्पादितास्त्रिमे । त्रयो गन्धर्वमुख्यानां (णां) विक्रान्ता युद्धदुर्मदाः ॥
आम्बेयाः काम्बलेयाश्च तथा वसुमतीसुताः । तैर्गणैर्विविधैर्व्याप्तमिमं लोकं चराचरम् ॥ २३
विद्यावन्तश्च तेनैव विक्रान्तेन महात्मना । उत्पादिता महाभागा रूपविद्याधनेश्वराः ॥ २४
तेषामुदीर्णवीर्याणां गन्धर्वाणां महात्मनाम् । नामानि कीर्त्यमानानि शृणुध्वं मे विवक्षतः ॥ २५
हिरण्यरोमा कपिलः सुलोमा मागधस्तथा । चन्द्रकेतुश्च वै गौड्रो गोदश्चैव महाबलः ॥ २६
महाविद्यावदातानां विक्रान्तानां तपस्विनाम् । इत्येवमादिर्हि गणो ह्ये चान्ये च सुलोचने ॥ २७
*शिवा च सुमनाश्चैव ताभ्यामपि महात्मना । उत्पादिता विश्रवसा विद्याचरणगोचराः ॥* २८
शैवेयाश्चैव विक्रान्तास्तथा सौमनसा गणाः । एतैर्व्याप्तमिमं लोकं विद्याधरगणैस्त्रिभिः ॥ २९
एभ्योऽनेकानि जातानि अम्बरान्तरचारिणाम् । लोके गणशतान्येव विद्याधरविचेष्टितात् ॥
अश्वमुख्याश्च तेनैव विक्रान्तेन महात्मना । उत्पादिता ह्यश्वमुखाः किंनरांस्तान्निबोधत ॥ ३१
समुद्रसेनः कालिन्दो महानेत्रो महाबलः । सुवर्णघोषः सुग्रीवो महाघोषश्च वीर्यवान् ॥ ३२
इत्येवमादिर्हि गणः किंनराणां महात्मनाम् । हयाननानां विद्वद्भिर्विस्तीर्णः परिकीर्त्यते ॥ ३३
तथा समुत्थितेनैव विक्रान्तेन महात्मना । उत्पादिता नरमुखाः किंनराः शाशपायनाः ॥ ३४
हरिषेणः सुषेणश्च वारिषेणश्च वीर्यवान् । रुद्रसेन्द्रदत्तो च चन्द्रद्रुमहाद्रुमौ ॥
बिन्दुश्च बिन्दुसारश्च चन्द्रवंशाश्च किंनराः । इत्येते किंनराः श्रेष्ठा लोके ख्याताः सुशोभनाः ३५

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

१ ख. ङ. °रन स्मृताः । त° । २ ख °ताः । अन्यादिष्या यु° । ३ ख. ङ. °रो मौनेयाः परिविश्रुताः । ४ ख घ. ङ. अश्वमुखी । ५ ख घ ङ. इत्याद्य । ६ क. °ने । लोक° । ७ ग. घ. ङ. गहो । ८ क. °मुखाश्च । ९ ग घ. ङ. °शाऽधमपाद्यनेन ।

नृत्यगीतप्रगल्भानामेतेषां द्विजसत्तमाः । लोके गणशतान्येव किंनराणां महात्मनाम् ॥ ३७
यक्षा यक्षोपशान्तश्च लौहेया रूपशालिनी । दुहिता सुरविन्देति प्रकाशा सिद्धसंमता ॥ ३८
उपायाकेतनस्याहि स्वयमुत्पादितो गणः । करालकेन भूतानां तेषां नामानि मे शृणु ॥ ३९
भूता भूतगणैर्ज्ञेया आवेशकनिवेशकाः । * सुतारः कालभवनानिर्देशकविदेशकाः ॥
इत्येवमादिर्हि गणो भूमिगोजरकः स्मृतः ॥ ४०
विज्ञेय इह लोकेऽस्मिन्भूतानां भूतनायकः । ये नूत्कृष्टा भवन्त्येषामम्बरान्तरचारिणाम् ॥
वृक्षाग्रमात्रमाकाशं ते चरन्ति न संशयः ॥ ४१
तत्रेमे देवगन्धर्वाः प्रायेण कथिता मया । देवोपस्थाननिरता विज्ञेयास्ते यशस्विनः ॥ ४२
नारायणं सुरगुरुं विरजं पुष्करेक्षणम् । हिरण्यगर्भं च तथा चतुर्वक्त्रं स्वयंभुवम् ॥ ४३
शंकरं च महादेवमीशानं च जगत्प्रभुम् । इन्द्रपूर्वांस्तथाऽऽदित्यान्रुद्रांश्च वसुभिः सह ॥ ४४
उपतस्थुः सगन्धर्वा नृत्यगीतविशारदाः । त्रिदशाः सर्वलोकस्था निपुणा गीतवादिनः ॥ ४५
हंसो ज्येष्ठः कनिष्ठोऽन्यो मध्यमौ च हहा हुहुः । चतुर्थो धिषणश्चैव ततो वासिरुचिस्तथा ॥
षष्ठस्तु तुम्बुरुस्तेषां ततो विश्वावसुः स्मृतः । इमाश्चाप्सरसो दिव्या विहिताः पुण्यलक्षणाः ॥
सुषुवेऽष्टौ महाभागा वरिष्ठा देवपूजिताः । अनवद्यामनवशामन्वतां मदनप्रियाम् ॥
अरूपां सुभगां भासीमरिष्टाऽष्टौ व्यजायत ॥ ४८
मनोवती सुकेशा च तुम्बुरोस्तु सुते उभे । पञ्चचूडास्त्विमा दिव्या दैविक्योऽप्सरसो दश ॥
मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला । घृतस्थला घृताची च विश्वाची पूर्वचीत्यपि ॥
प्रम्लोचेत्यभिविख्याताऽनुम्लोचन्ती तथैव च ॥ ५०
अनादिनिधनस्याथ जज्ञे नारायणस्य या । ऊरोः सर्वानवद्याङ्गी उर्वश्येकादशी स्मृता ॥ ५१
मेनस्य मेनका कन्या ब्रह्मणो हृष्टचेतसः । सर्वाश्च ब्रह्मवादिन्यो महायोगाश्च ताः स्मृताः ५२
गणा अप्सरसां ख्याताः पुण्यास्ते वै चतुर्दश । + आहूताः शोभयन्तश्च गणा ह्येते चतुर्दश॥
ब्रह्मणो मानसाः कन्याः शोभयन्त्यो मनोः सुताः । वेगवन्तस्त्वरिष्टाया ऊर्जायाश्चाग्निसंभवाः ।
(× आयुष्मत्यश्च सूर्यस्य रश्मिजाताः सुभास्वराः । गभस्तेजश्च सोमस्य ज्ञेयास्ते कुरवः शुभाः ॥
यज्ञोत्पन्नाः शुभा नाम ऋक्सामान्यास्तु वह्नयः) । वारिजा ह्यमृतोत्पन्ना अमृता नामतः स्मृताः
वायूत्पन्ना मुदा नाम भूमिजाता भवास्तु वै । विद्युतश्च रुचो नाम मृत्योः कन्याश्च भैरवाः ॥
शोभयन्त्यश्च कामस्य गणाः प्रोक्ताश्चतुर्दश । सेन्द्रोपेन्द्रैः सुरगणै रूपातिशयनिर्मिताः ॥ ५८

---

* इदमर्धं नास्ति क. पुस्तके । + एतदर्धस्थानेऽय ग्रन्थः–'आहूता शोभयन्त्यश्च वेगवत्यस्तथैव च । दुर्मयाश्च युवत्यश्च तथा भेकुरयः शुभाः । वह्नयो ऽमृताखेदा भुवश्च रुचयस्तथा । भैरवाः शोभयन्त्यश्च गणा ह्येते चतुर्दश' इति–ख. ग. पुस्तकयोः । × धनुश्चिह्नान्तर्गतग्रन्थ. क पुस्तके नास्ति ।

---

१ ग. घ. ङ. यथा य । २ ग घ ङ. °श्च लौहाया । ३ ग. घ. ङ. उपयाचित° । ४ ख. ग. घ. ङ. भूतभू° । ५ ङ. °तारका° । ६ ख. ङ. °काले भवतानि° । ७ क. ये उत्कृ° । ८ ख. ग. ङ. ज्येष्ठा कनिष्ठाया म° । ९ ख. घ. ङ. °र्थो विषगाणश्च ततो वसुरु° । १० घ. °न्यो ब्रह्मणो° ११ क. °वन्त्यस्त्व° । १२ ख. °युर्नत्यश्च । ग. घ ङ. °युवत्यश्च । १३ घ. ङ. °ता. शुभा.स्व । १४ ख ग. ङ °भूतिजा° । १५ क °यन्त्य कामगुणा म° । १६ ख. ग. ङ. °ताः । तिलातिल म ।

( कश्यपीयप्रजासर्गः )

शुभरूपा महाभागा दिव्या नारी तिलोत्तमा । ब्रह्मणश्चाग्निकुण्डाच्च देवनारी प्रभावती ॥
रूपयौवनसंपन्ना उत्पन्ना लोकविश्रुता ॥ ५९
वेदीतलसमुत्पन्ना चतुर्वक्त्रस्य धीमतः । नाम्ना वेदवती नाम सुरनारी महाप्रभा ॥ ६०
तथा यमस्य दुहिता रूपयौवनशालिनी । वरहेमनिभा हेमा देवनारी सुलोचना ॥ ६१
इत्येते बहुसाहस्रं भास्वरा ह्यप्सरोगणाः । देवतानामृषीणां च पत्न्यस्ता मातरश्च ह ॥ ६२
सुगन्धाश्चैकवर्णाश्च सर्वाश्चाप्सरसः समाः । संप्रयोगे तु कान्तेन माद्यन्ति मदिरां विना ॥
तासामाप्यायते स्पर्शादानन्दश्च विवर्धते ॥ ६३
(+पर्वते नारदे पूर्वं रेतः स्कन्नं प्रजापतेः । पर्वतस्तत्र संभूतो नारदश्चैव तावुभौ ॥ ६४
तयोर्यवीयसी चैव तृतीयाऽरुन्धती स्मृता । देवरूपो(?)सूर्यजन्म तस्मिन्नारदपर्वतौ )॥ ६५
विनतायास्तु पुत्रौ द्वावरुणो गरुडश्च ह । षट्त्रिंशत्तु स्वसारश्च यवीयस्यस्तु ताः स्मृताः ॥ ६६
गायत्र्यादीनि च्छन्दांसि सौपर्णेयाश्च पक्षिणः । हव्यवाहानि सर्वाणि दिक्षु संनिहितानि च ॥
कद्रूर्नागसहस्रं वै चराचरमजीजनत् । अनेकशिरसां तेषां खेचराणां महात्मनाम् ॥
बहुधा नामधेयानां प्राधान्यस्तु निबोधत ॥ ६८
तेषां प्रधाननागाश्च शेषवासुकितक्षकाः । सर्कर्णारश्च जम्भश्च अञ्जनो वामनस्तथा ॥ ६९
ऐरावतमहापद्मौ कम्बलाश्वतरावुभौ । ऐलपत्रश्च शङ्खश्च कर्कोटकधनंजयौ ॥ ७०
महाकर्णो महानीलो धृतराष्ट्रबलाहकौ । कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥ ७१
शिलीमुखो दधिमुखः कालीयः शालिपिण्डकः । बिन्दुपादः पुण्डरीको नागश्चापूरणस्तथा ॥
कपिलश्चाम्बरीषश्च धृतपादश्च कच्छपः । प्रह्लादः पद्मचित्रश्च गन्धर्वोऽथ मनस्विकः ॥ ७३
नहुषः खररोमा च मणिरित्येवमादयः । काद्रवेया मया ख्याताः खशायास्तु निबोधत ॥ ७४
खशा विजज्ञे पुत्रौ द्वौ विश्रुतौ पुरुषादकौ । ज्येष्ठं पश्चिमसंध्यायां पूर्वस्यां मनुजास्तथा॥ ७५
विलोहितं विकर्णं च पूर्वं साऽजनयत्सुतम् । चतुर्भुजं चतुष्पादं द्विमूर्धानं द्विधागतिम् ॥ ७६
सर्वाङ्गकेशं स्थूलाङ्गं तुङ्गनासं महोदरम् । स्थूलशीर्षं महाकर्णं मुञ्जकेशं मनोरथम् ॥ ७७
ह्रस्वोष्ठं दीर्घजङ्घं च अश्वदंष्ट्रं महाहनुम् । रक्तजिह्वं जटाक्षं च स्थूलास्यं दीर्घनासिकम् ॥७८
गुह्यकं शितिकर्णं च महानन्दं महामुखम् । एवंविधं खशा पुत्रं विजज्ञे साऽतिभीषणम् ॥ ७९
तस्यानुजं द्वितीयं तु खशा चैव व्यजायत । त्रिशीर्षं च त्रिपादं च त्रिहस्तं कृष्णलोचनम् ॥८०
ऊर्ध्वकेशं हरिच्छ्मश्रुं शिलासंहननं दृढम् । ह्रस्वकायं सुबाहुं च महाकायं महाबलम् ॥ ८१
आकर्णदारितास्यं च लम्बभ्रूं स्थूलनासिकम् । स्थूलोष्ठमष्टदंष्ट्रं च द्विजिह्वं शङ्कुकर्णकम् ॥ ८२

+ धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

१ ख. ग. घ. ङ. °भावतु° । २ ख. ग. घ. ङ. °हसा भा । ३ ख. ङ. °न्धा चाप्यनिष्पन्दा स° । ४ क ग. °ण । इत्येवा° । ५ ख घ. ङ. °नियता° । ६ ख घ वै प्रावर° । ७ ख घ ङ. °गाना शे° । ८ ग. °काः । कर्णार- श्चैव ज° । ९ क. °कर्णार° । १० ख. °भौ । एला° । ङ. °भौ । एल° । ११ घ. ङ. °कर्णो महानीलो धृ° । १२ ख. ङ. °ष्पदन्तश्च । १३ ख. घ. ङ. °था । दुर्मामु° । १४ ख. ग. घ. ङ. बिल्वपाद. पुण्डरीकना° । १५ ख. घ ङ. °श्च तथा पापश्च क° । १६ क °श्च नमास्वि° । १७ ग. °रमम् । ह्र° । १८ ख. ग. घ ङ. स्थूलभद्रौ° । १९ ख. °क शङ्कु° । २० ख घ. ङ °हासुन° । २१ ख. घ ङ त्रिहस्त । २२ ख ङ. °म्बभ्रूस्थू° ।

पिङ्गलोद्वृत्तनयनं जटिलं पिङ्गलं तथा । महाकर्णं महोरस्कं कटिहीनंकृशोदरम् ॥
नखिनं लोहितग्रीवं सा कनिष्ठं प्रसूयते ॥ ८३
सद्यः प्रसूतमात्रौ तु विवृद्धौ च प्रमाणतः । उपभोगसमर्थाभ्यां शरीराभ्यामुपस्थितौ ॥
सद्योजातविवृद्धाङ्गौ मातरं पर्यभूषताम् ॥ ८४
ज्यायांस्तयोस्तु यः क्रूरो मातरं सोऽभ्यकर्षत । अब्रवीन्मातरायाहि भक्षार्थं क्षुधयाऽर्दितः॥८५
न्यषेधयत्पुत्त्रर्हीनं ज्यायांसं तु कनिष्ठकः । अब्रवीत्सोऽसकृत्त्वं वै रक्षेमां मातरं स्वशाम् ॥
बाहुभ्यां परिगृह्येनं मातरं तां व्यमोचयत् ॥ ८६
एतस्मिन्नेव काले तु प्रादुर्भूतस्तयोः पिता । तौ दृष्ट्वा विकृताचारौ वसतां हीत्यभाषत ॥ ८७
तौ तु त पितरं दृष्ट्वा बलवन्तौ त्वरान्वितौ । मातुरेव पुनश्चाङ्के प्रलयेनां स्वमायया ॥ ८८
अथाब्रवीदृषिर्भार्यामाभ्यामुक्तवत्यसि । पूर्वमाचक्ष्व तत्त्वेन तथैवाऽऽभ्यां व्यतिक्रमम् ॥ ८९
मातुलं भजते पुत्रः पितॄन्भजति कन्यका । यथाशीला भवेन्माता तथाशीलो भवेत्सुतः ॥ ९०
यद्वर्णा तु भवेद्भूमिस्तद्वर्णं सलिलं ध्रुवम् । मातॄणां शीलदोषेण तथा शीलगुणैः पुनः ॥
विभिन्नास्तु प्रजाः सर्वास्तथा ख्यातिवशेन च ॥ ९१
बलशीलादिभिस्तासामदितिर्धर्मतत्परा । * गन्धशीला दितिश्चैव प्रवार्ध्ययनशालिनी ॥
धर्मशीलादिभिश्चैव प्रबोधबलशालिनी ॥ ९२
गीतशीला तथाऽरिष्टा मायाशीला दनुः स्मृता । विनता तु पुनर्देवी वैहायसगतिप्रिया ॥ ९३
तपोमयेन शीलेन सुरभिः समलंकृता । क्रोधशीला तथा कद्रूः क्रोधनासुखशीलका ॥ ९४
दनायुषायाः शीलं वै वैरानुग्रहलक्षणम् । त्वं च देवि महाभागे क्रोधशीला मताऽसि मे ॥ ९५
इत्येतानि स्वशीलानि स्वभावालोकनाघृणां । कर्मतो यत्नतो बुद्ध्या रूपतो बलतस्तथा ॥
क्षमातश्चैव भिन्नानि भावितार्थबलेन च ॥ ९६
रजःसत्त्वतमोवृत्तेर्विश्वरूपाः स्वभावतः । मातुलं त्वनुयातास्ते पुत्रका गुणवृत्तिभिः ॥ ९७
इत्येवमुक्त्वा भगवान्खशामप्रतिमां तदा । पुत्रावाहूय साम्ना वै चक्रे सोमप्रभीतयः(?)॥ ९८
ताभ्यां च यत्कृतं तस्यास्तदाचष्ट तदा खशा । मात्रा यथा समाख्यातं कर्म ताभ्यां पृथक्पृथक्
तेन धात्वर्थयोगेन तत्त्वदर्शी चकार ह ॥ ९९
यक्ष इत्येष धातुर्वै खादने कृपणे च सः । यक्षयत्युक्तवान्यस्मात्तस्माद्यक्षो भवत्ययम् ॥ १००
रक्ष इत्येष धातुर्यः पालने स विभाव्यते । उक्तवांश्चैव यस्मात्तु रक्ष मे मातरं खशाम् ॥
नाम्नाऽयं राक्षसस्तस्माद्भविष्यति तवाऽऽत्मजः ॥ १०१
स तदा तद्विधान्दृष्ट्वा विज्ञाय तु तयोः पिता । तथा भाविनमर्थं च बुद्ध्वा मातृकृतं तयोः ॥

---

* इदमर्धं नास्ति घ. पुस्तके ।

---

१ ग. °टिलं°द्दृष्टिरिदकम् । म° । ग. ङ. °टिलोद्वृद्धिरिदकम् । म° । २ ख. घ. ङ कन्या [illegible] । ३ ग. ङ. नखिलं । ४ ग. °ध एव्व [illegible]द्देरिदकम् । एव विध कुमार सा । ५ ग. ङ. °ष्ट सप्रसूयत । क° । ६ ग. घ. ङ. °रः । प्रभाण यो । ७ ख ग घ ङ. °प्रसा प्रवृद्ध तदुद्यानि° । ८ ग. [illegible]निर्वाप्य । ९ क. वद्रू. । १० ग. घ °न्वा । [illegible] । ११ [illegible] नि [illegible] । १२ ङ. °विर्या । १३ ग ङ. [illegible] मे तुं । १४ ख ग. गोभान् ।

(कश्यपीयप्रजानामानि)

तावुभौ क्षुधितौ दृष्ट्वा विस्मितः परिमृज्य च । तयोः मादिशदाहारं प्रजापतिरसृग्वसे ॥ १०३
पिता तौ क्षुधितौ दृष्ट्वा वरं चेम तयोर्ददौ । युवयोर्हस्तसंस्पर्शो नक्तमेव तु सर्वशः ॥ १०४
नक्ताहारविहारौ च दिवास्वप्नोपभोगिनौ । नक्तं चैव बलीयांसौ दिवास्वप्नावुभौ युवाम् ॥
मातरं रक्षतं चैव धर्मश्चैवानुशिष्यताम् । इत्युक्त्वा कश्यपः पुत्रौ तत्रैवान्तरधीयत ॥ १०६
गते पितरि तौ वीरौ निसर्गादेव दारुणौ । विपर्ययेण वर्तन्तौ क्रिमकौ प्राणिहिंसकौ ॥ १०७
महाबलौ महासत्त्वौ महाकायौ दुरासदौ । मायाविनौ च दृश्यौ तावन्तर्धानगतावुभौ ॥ १०८
तौ कामरूपिणौ घोरौ विकृतिज्ञौ स्वभावतः । रूपानुरूपैराहारैः प्रभवेतामुभावपि ॥ १०९
देवासुरानृषींश्चैव गन्धर्वान्किंनरानपि । पिशाचांश्च मनुष्यांश्च पन्नगान्पक्षिणः पशून् ॥ ११०
भक्षार्थमपि लिप्सन्तौ सर्वतस्तौ निशाचरौ । इन्द्रेण तु धेरौ चैव धृतौ दृत्तौ स्वबध्यताम्॥१११
यक्षस्तु न कदाचिद्धि निशीथे ह्येककश्चिरम् । आहारं स परीप्सन्वै शब्देनानुचचार ह ॥ ११२
आससाद पिशाचौ द्वौ जंतुचण्डौ च तावुभौ । पिङ्गाक्षावूर्ध्वरोमाणौ वृत्ताक्षौ तु सुदारुणौ ॥
असृङ्मांसवसाहारौ पुरुषादौ महाबलौ । कन्याभ्यां सहितौ तौ तु ताभ्यां प्रियचिकीर्षया॥११४
द्वे कन्ये कामरूपिण्यौ तदाचारे च ते शुभे । आहारार्थमटन्तौ तौ कन्याभ्यां सहितावुभौ ॥
तेऽपश्यन्राक्षसं तत्र कामरूपं महाबलम् । सहसा संनिपाते तु दृष्ट्वा चैव परस्परम् ॥ ११६
रक्षमाणौ ततोऽन्योन्यं परस्परजिघृक्षवः । पितरावूचतुः कन्ये युवामानयतं द्रुतम् ॥ ११७
जीवग्राहं विगृह्यैनं विस्फुरन्तं पदे पदे । ततः समभिसृत्यैनं कन्ये जगृहतुस्तदा ॥
गृहीत्वा हस्तयोस्ताभ्यामानीते पितुरन्तिके ॥ ११८
ताभ्यां करे गृहीतं तं पिशाचावथ राक्षसम् । पृच्छतां कोऽसि कस्य त्वं स च सर्वमभाषत ॥
तस्य कर्माभिविज्ञातं ज्ञात्वा तौ राक्षसर्षभौ । अजश्च खण्डं तस्यैते मत्यपादयतां सुते ॥
तौ तुष्टौ कर्मणा तस्य कन्ये द्वे ददतुस्तु ते ॥ १२१
पैशाचेन विवाहेन सुदत्ता सुद्रवाहनः । अजः खण्डश्च ताभ्यां तौ तदाश्रावयतां धनम् ॥१२२
इयं ब्रह्मधना नाम मम कन्या सलोपिका । ब्रह्मसत्त्वधनाहारा इति खण्डोऽभ्यभाषत ॥ १२३
इयं जन्तुधना नाम कन्या सर्वाङ्गसुन्दरी । जन्तवोऽस्या धनाहारास्तावश्रावयतां धनम् ॥
सर्वाङ्गकेशी नाम्ना च कन्या जन्तुधना तथा । अकर्णान्ताऽप्यरोमा च कन्या ब्रह्मधना तु या ॥
ब्रह्मधनं प्रसूता सा तत्रस्था नैव कन्यका । एवं पिशाचकन्ये ते मिथुने द्वे प्रसूयताम् ॥
तयोः प्रजाविसर्गं च ब्रुवतो मे निबोधत ॥ १२६
हेतुप्रहेतू(प्रथ?)सोऽन्येयो यवस्तथा । विस्फूर्जिश्चैव वातश्च आपो व्याघ्रस्तथैव च ॥ १२७
सर्पश्च राक्षसा ह्येते यातुधानात्मजा दश । सुमेरस्यानुचरा ह्येते सह तेन भ्रमन्ति च ॥ १२८
हेतुपुत्रस्तथा लङ्कुर्लङ्कोर्द्वावेव चात्मजौ । माल्यवांश्च सुमाली च प्रहेतुतनयाञ्शृणु ॥
प्रहेतुतनयः श्रीमान्पुलोमा नाम विश्रुतः ॥ १२९

---

१ घ. ङ. ॰ष्वार्थं । २ घ. ङ. ॰वशे ते॰ । ३ क. ॰त्ता गुर॰ । ४ ख. द्वौ जालन॰ । ५ क. जन्तु च । घ. ङ. [illegible] । ६ ग. घ. ङ. ॰दा मर्षाति॰ । ७ घ. ङ. हने । ८ घ. ङ. ॰नैत नि॰ । ९ ग. ॰शावनथ । १० ग. ॰[illegible] । ११ क. [illegible] । १२ ग. घ. ङ. ॰हु[illegible]तरा । ज॰ । १३ ख. ॰हारने प्र॰ । घ. ॰हास्यान [illegible] । १४ क. ग. [illegible] । घ. [illegible] । ङ. ग. [illegible] नैवकन्यकाम् । ए॰ । १५ ग. ॰पुर्वर्ध॰ ।

वधपुत्रौ दुराचारौ विघ्नश्च शमनश्च ह। विद्युत्पुत्रो दुराचारो रुमनो नाम राक्षसः ॥
स्फूर्जपुत्रो निकुम्भश्च क्रूरो वै ब्रह्मराक्षसः। वातपुत्रो विरागस्तु आपपुत्रस्तु जम्बुकः ॥ १३०
व्याघ्रपुत्रो निरानन्दो जन्तूनां विघ्नकारकः। इत्येते वै पैराक्रान्ताः क्रूराः सर्वे तु राक्षसाः ॥
कीर्तिता यातुधानास्तु ब्रह्मधानान्निबोधत। यज्ञः पिता धुनिः क्षेमो ब्रह्मो पापोऽथ यज्ञहा ॥
स्वाकोटकः कलिः सर्पो ब्रह्मधानात्मजा दश। स्वसारो ब्रह्मराक्षस्यस्तेषां चेमाः सुदारुणाः ॥
रक्तकर्णा महाजिह्वाऽक्षया चैवोपहारिणी। एतेषामन्वये जाताः पृथिव्यां ब्रह्मराक्षसाः ॥ १३४
श्लेष्मातकतरुष्वेते प्रायशस्तु कृतालयाः। इत्येते राक्षसाः क्रान्ता यक्षस्यापि निबोधत ॥ १३५
चक्रमेऽप्सरसं यक्षः पञ्चस्थूलां क्रतुस्थलीम्। तां लिप्सुश्चिन्तयानश्च नन्दनं स चचार ह ॥
वैभ्राजं सुरभिं चैव तथा चैत्ररथं च यत्। दृष्ट्वाऽऽनन्दने तस्मिन्नप्सरोभिः सहासतीम् ॥ १३७
नोपायं विन्दते तत्र तस्या लाभाय चिन्तयन्। दूषितः स्वेन रूपेण कर्मणा तेन दूषितः ॥ १३८
ममोद्विजन्ते भूतानि भयावृत्तस्य सर्वशः। तत्कथं नाम चार्वङ्गीं प्राप्नुयामहमङ्गनाम् ॥ १३९
दृष्ट्वोपायं ततः सोऽथ शीघ्रकारी व्यवर्तत। कृत्वा रूपं वसुरुचेर्गन्धर्वस्य तु गुह्यकः ॥
ततः सोऽप्सरसां मध्ये तां जग्राह क्रतुस्थलीम् ॥ १४०
बुद्ध्वा वसुरुचिं तं सा भावेनैवाभ्यवर्तत। संवृतः स तया सार्धं दृश्यमानोऽप्सरोगणैः ॥ १४१
तत्र संसिद्धकरणः सद्यो जातः सुतोऽस्य वै। परिणाहोच्छ्रयैर्युक्तः सद्यो वृद्धो ज्वलञ्छ्रिया ॥
राजाऽहमिति नाभिर्हि पितरं सोऽभ्यभाषत। तवात्र जाते न भीतिः पिता तं प्रत्युवाच ह ॥
माताऽनुरूपो रूपेण पितुर्वीर्येण जायते। जाते स तस्मिन्हर्षेण स्वरूपं प्रत्यपद्यत ॥ १४४
स्वभावं प्रतिपद्यन्ते वृहन्तो यक्षराक्षसाः। म्रियमाणाः प्रसुप्ताश्च क्रुद्धा भीताः प्रहर्षिताः ॥
ततोऽब्रवीदप्सरसं स्मयमानः स गुह्यकः। गृहं मे गच्छ सुश्रोणि सपुत्रा वरवर्णिनी ॥ १४६
इत्युक्ता सहसा तं न दृष्ट्वा स्वं रूपमास्थितम्। विभ्रान्ताः प्राद्रवन्भीताः क्रोधमानाप्सरोगणाः ॥
[illegible] सान्त्वयन्गिरा। गन्धर्वाप्सरसां मध्ये तां नीत्वा स न्यवर्तत ॥
तां च दृष्ट्वा [illegible] गताप्सरसां गणाः। यक्षाणां त्वं जनित्रीति प्रोचुस्तां वै क्रतुस्थलीम्
[illegible] तनो यक्षः स्वमालयम्। न्यग्रोधरोहिणं नाम गुह्यका यत्र शेरते ॥
तस्मिन्निवासो यक्षाणां न्यग्रोधः सर्वतः प्रियः ॥ १५०
यक्षो रजतनाभस्तु गुह्यकानां पितामहः। अनुह्रादस्य दैत्यस्य भद्रामतिवरां सुताम् ॥
उपयेमे स भद्रायां यस्यां मणिवरो वशी ॥ १५१
जज्ञे सा मणिभद्रं च शक्रतुल्यपराक्रमम्। तयोः पत्न्यौ भगिन्यौ तु क्रतुस्थल्यात्मजे शुभे ॥
नाम्ना पुण्यजनी चैव तथा देवजनी च या। विजज्ञे मणिभद्रात्तु पुत्रान्पुण्यजनी शुभान् ॥
सिद्धार्थं सूर्यतेजं च सुमन्तं नन्दनं तथा। कन्यकं यैविकं चैव मणिदत्तं वसुं तथा ॥ १५४

---

१ ख. दत्तो। २ ख. ग. घ. ङ. °नन्दः सर्पो यं वि°। ३ क. परिक्रा°। ४ ग. ग. घ. यज्ञे पि°। ५ ग. ग. घ. ङ. °द्वा पेनोऽप। ६ ङ. घ. °दृष्ट्वा तेषां। ७ ग. ग. ङ. °कर्णा म°। ८ ग. ग. ङ. धैवाप°। ९ क. एतासाम°। १० घ. ङ. °रति पै°। ११ ग. ङ. घ. °यादृशस्य°। १२ क. °यं प्रमतं कन्य°। १३ घ. ङ. जाता नाम्नी°। १४ ग. °तो महान्तो। १५ ग. °दृष्ट्वा विग्रस्ता गा°। १६ ग. घ. ङ. भद्रे यो वरयामितिवरां। १७ ख. घ. ङ. पाथि।

(कश्यपीयप्रजासर्गः)

सर्वानुभूतं शङ्खं च पिङ्गाक्षं भीरुमेव च । तथा मन्दरशोभिं च पद्मं चन्द्रप्रभं तथा ॥ १५५
मेघपूर्णं सुभद्रं च प्रद्योतं च महौजसम् । द्युतिमत्केतुमन्तौ च मित्रं मौलिसुदर्शनौ ॥ १५६
चत्वारो विंशतिश्चैव पुत्राः पुण्यजनाः शुभाः । जज्ञिरे मणिभद्रस्य ते सर्वे पुण्यलक्षणाः ॥
तेषां पुत्राश्च पौत्राश्च यक्षाः पुण्यजनाः शुभाः ॥ १५७
विजज्ञे देवजननी पुत्रान्मणिवरात्मजान् । पूर्णभद्रं हेमरथं मणिमन्नन्दिवर्धनौ ॥ १५८
कुस्तुम्बुरुं पिशङ्गाभं स्थूलकर्णं महाजयम् । श्वेतं च विपुलं चैव पुष्पवन्तं भयावहम् ॥ १५९
पद्मवर्णं सुनेत्रं च यक्षं बालं बकं तथा । कुमुदं क्षेमकं चैव वर्धमानं तथा दमम् ॥ १६०
पद्मनाभं वराङ्गं च सुवीरं विजयं कृतिम् । पूर्णमासं हिरण्याक्षं सुरूपं चैवमादयः ॥ १६१
पुत्रा मणिवरस्यैते यक्षा वै गुह्यकाः स्मृताः । सुरूपाश्च विरूपाश्च स्रग्विणः प्रियदर्शनाः ॥ १६२
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥ १६३
खशायास्त्वपरे पुत्रा राक्षसाः कामरूपिणः । तेषां यथा प्रधानान्वै वर्ण्यमानान्निबोधत ॥
लालोविः कुथनो भीमः सुमाली मधुरेव च । विस्फूर्जितो विद्युज्जिह्वो मातङ्गो धूम्रितस्तथा ॥
चन्द्रार्कः सुकरो बुध्नः कपिलोमः महासकः । क्रीडः परशुनाभश्च चक्राक्षश्च निशाचरः ॥ १६६
त्रिशिराः शतदंष्ट्रश्च तुण्डकेशश्च राक्षसः । यक्षश्चाकम्पनश्चैव दुर्मुखश्च शिलीमुखः ॥ १६७
इत्येते राक्षसवरा विक्रान्ता गणरूपिणः । सर्वलोकचरास्ते तु त्रिदशानां समक्रमाः ॥ १६८
सप्त चान्या दुहितरस्ताः शृणुध्वं यथाक्रमम् । तासां च यः प्रजासर्गो येन चोत्पादिता गणाः ॥
आलम्बा उत्कचा कृष्णा निर्ऋता कपिला शिवा । केशिनी च महाभागा भगिन्यः सप्त याः स्मृताः
ताभ्यो लोकामिपादश्च हन्तारो युद्धदुर्मदाः । उदीर्णा राक्षसगणा इमे उत्पादिताः शुभाः ॥
आलम्बेयो गणः क्रूर उत्कचेयो गणस्तथा । तथा कार्ष्णेयशैवेया राक्षसा ह्युत्तमा गणाः ॥
तथैव नैर्ऋतो नाम त्र्यम्बकानुचरेण ह । उत्पादितः प्रजासर्गो गणेश्वरचरेण तु ॥ १७३
* उत्पादिता बलवता उदीर्णा यक्षराक्षसाः । विक्रान्ताः शौर्यसंपन्ना नैर्ऋता देवराक्षसाः ॥
येषामधिपतिर्युक्तो नाम्ना ख्यातो विरूपकः ॥ १७४
तेषां गणशतानेका उद्धतानां महात्मनाम् । प्रायेणानुचरन्त्येते शंकरं जगतः प्रभुम् ॥ १७५
दैत्यराजेन कुम्भेन महाकाया महात्मना । उत्पादिता महावीर्या महाबलपराक्रमाः ॥ १७६
कापिलेया महावीर्या उदीर्णा दैत्यराक्षसाः । कम्पनेन च यक्षेण केशिन्यास्ते परे जनाः ॥ १७७
उत्पादिता बलवता उदीर्णा यक्षराक्षसाः । केशिनीदुहितुश्चैव नीलायाः क्षुद्रमानसाः ॥ १७८
आलम्बेयेन जनिता नैर्ऋताः सुरसिकेन हि । नैला इति समाख्याता दुर्जया घोरविक्रमाः ॥
चरन्ति पृथिवीं कृत्स्नां तत्र ते देवलौकिकाः । बहुत्वाच्चैव सर्गस्य तेषां वक्तुं न शक्यते ॥

* इदमर्धं नास्ति ख. ग. घ. ङ पुस्तकेषु ।

१ घ. °शोभं च । २ ख. ग. घ. ङ. 'निभान्के' । ३ ग. ग. ङ. मित्रार्को° । ४ घ. °त्रान्गुह्यचरात्मजान् । पू° । ५ ग. ङ. °आन् । पू° । ६ ग. ङ हैमवत । ७ घ. °स्तुम्बर रि° । ८ ख °हामय° । ९ ललावी । १० ख. ग अथ° । १५ ख. ग. ङ. °श्च निशाचरः इ° । १६ ख. °न्ताशुर्न° । १७ ग. सर्वे लोकचरा° । १८ ग. °क्रमा° । १९ ख. घ. °स्फूर्जन्तो वि° । ११ ख. घ. °शुरालश । १२ ग. °राः चित° । १३ ग. ङ. °ऽकोशः । १४ ख. ङ. °सः । घ. कम्पने° । २० घ. ङ. °न्या याः° । २१ क. महाशाया° । २२ ग. घ. ङ. °ङ राक्षसाः ।

तस्यास्त्वपि च नीलाया विकचा नाम राक्षसी । दुहिता स्वभावविकचा मन्दसत्त्वपराक्रमा ॥
तस्या अपि विरूपेण नैर्ऋतेनेह च प्रजाः । उत्पादिताः सुरा(?)घोराः शृणु तांस्त्वनुपूर्वशः ॥ १८२
दंष्ट्राकरालविकृता महाकर्णा महोदराः । हारका भीषकाश्चैव तथैव क्रामकाः परे ॥ १८३
वैनकाश्च पिशाचाश्च वाहकाः प्राशकाः परे । भूमिराक्षसका ह्येते मन्दाः पुरुषविक्रमाः ॥ १८४
चरन्त्यदृष्टपूर्वाश्च नानाकारा ह्यनेकशः । उत्कृष्टबलसत्त्वा ये ते च वै खेचराः स्मृताः ॥ १८५
लक्षमात्रेण चाऽऽकाशं स्वल्पाः स्वल्पं चरन्ति वै । एतैर्व्याप्तमिमं लोकं शतशोऽथ सहस्रशः ॥
भूमिराक्षसकैः सर्वैरनेकैः क्षुद्रराक्षसैः । नानाप्रकारैराक्रान्ता नानादेशाः समन्ततः ॥ १८७
समासाभिहताश्चैव ह्यष्टौ राक्षसमातरः । अष्टौ विभागा ह्येषां हि विख्याता अनुपूर्वशः ॥ १८८
भद्रका-निकराः केचिद्यज्ञनिष्पत्तिहेतुकाः(?) । सहस्रशतसंख्याता मर्त्यलोकविचारिणः ॥ १८९
पूतना मातृसामान्यास्तथा भूतभयंकराः । बालानां मानुषे लोके ग्रहा वैमानहेतुकाः ॥ १९०
स्कन्दग्रहादयश्चैव आपकाल्रासकादयः । कौमारान्ते तु विज्ञेया बालानां ग्रहवृत्तयः ॥ १९१
स्कन्दग्रहविशेषाणां मायिकानां तथैव च । पूतनानांभूतानां ये च लोकविनायकाः ॥ १९२
सहस्रशतसंख्यानां मर्त्यलोकविचारिणाम् । एवं गणशतान्येव चरन्ति पृथिवीमिमाम् ॥ १९३
यक्षाः पुण्यजना नाम तथा ये केऽपि गुह्यकाः । यक्षा देवजनाश्चैव तथा पुण्यजनाश्च ये ॥ १९४
गुह्यकानां च सर्वेषामगस्त्या ये च राक्षसाः । पौलस्त्या राक्षसा ये च विश्वामित्राश्च ये स्मृताः ॥
यक्षाणां राक्षसानां च पौलस्त्यागस्तयश्च ये । तेषां राजा महाराजः कुबेरो ह्यलकाधिपः ॥
यक्षा दृष्ट्वा पिबन्तीह नृणां मांसमसृग्वसाम् । रक्षांस्यनुप्रवेशेन पिशाचाः परिपीडनैः ॥ १९७
सर्वलक्षणसंपन्नाः समक्षेत्राश्च दैवतैः । भास्वरा बलवन्तश्च ईश्वराः कामरूपिणः ॥ १९८
अनाभिभाष्या विक्रान्ताः सर्वलोकनमस्कृताः । सूक्ष्माश्चौजस्विनो मेध्या वरदा यज्ञियाश्च ये ॥
देवानां तुल्यधर्माणो ह्यसुराः सर्वशः स्मृताः । त्रिभिः पादैस्तु गन्धर्वा देवैर्हीनाः प्रभावतः ॥
गन्धर्वेभ्यस्त्रिभिः पादैर्हीना वै सर्वगुह्यकाः । प्रभावतुल्या यक्षाणां विज्ञेयाः सर्वराक्षसाः ॥
ऐश्वर्यहीना यक्षेभ्यः पिशाचास्त्रिगुणं पुनः ॥ २०१
एवं धनेन रूपेण आयुषा च बलेन च । धर्मैश्वर्येण बुद्ध्या च तपःश्रुतपराक्रमैः ॥ २०२
देवासुरेभ्यो हीयन्ते त्रीन्पादान्वै परस्परम् । गन्धर्वाद्याः पिशाचान्ताश्चतस्रो देवयोनयः ॥ २०३

सूत उवाच—

अतः शृणुत भद्रं वः प्रजाः क्रोधवशात्मकाः । क्रोधायां कन्यका जज्ञे द्वादश ह्यात्मसंभवाः ॥
ता भार्याः पुलहस्याऽऽसन्नामतस्ता निबोधत ॥ २०४
मृगी च मृगमन्दा च हरिभद्रा इरावती । भूता च कपिशा दंष्ट्रा निशा तिर्या तथैव च ॥
श्वेता चैव स्वरा चैव सुरसा चेति विश्रुताः ॥ २०५
मृग्यास्तु हरिणाः पुत्रा मृगाश्चान्याः शशास्तथा । न्यङ्कवः शरभा ये च रुरवः पृषताश्च ये ॥
मृगराजा मृगमन्दाया गवयाश्चापरे तथा । महिषोष्ट्रवराहाश्च खड्गगौरमुखास्तथा ॥ २०७

१ ख घ. ङ. °भा । विरूपेण तस्यापि नै° । २ ख. °रे । रेवाका । ग. °रे । रेचक्रायाः पि° । ३ ख. घ. ङ. °राः त्रासकाः । ४ ग. घ. ध. °बालानु मा° । ५ ख. ग. घ. ङ नेषां वै । ६ ख. ग. घ. ङ. °नानुभू° । ७ °स्यतमा । ८ ङ विश्वमि° । ९ ख. घ. ङ. समासे° । १० घ. °रमृगाद्याः° ।

( कश्यपीयप्रजासर्गः )

हरेस्तु हरयः पुत्रा गोलाङ्गूलतरक्षवः । वानराः किंनराश्चैव व्याघ्राः किंपुरुषास्तथा ॥
इत्येवमादयोऽन्येऽपि इरावत्या निबोधत ॥ २०८
* सूर्यस्याण्डकपाले द्वे समानीय तु भौवनः । हस्ताभ्यां परिगृह्याथ रथंतरमगायत ॥ २०९
साम्ना प्रसूयमानेन सद्य एव गजोऽभवत् । स प्रागच्छदिरावत्यै पुत्रार्थे स तु भौवनः ॥२१०
इरावत्याः सुतो यस्मात्तस्मादैरावतः स्मृतः । देवराजोपवाह्यत्वात्प्रथमः स मतङ्गराट् ॥
शुभ्राभ्राभश्चतुर्दंष्ट्रः श्रीमानैरावतो गजः ॥ २११
अप्सुजस्यैकमूलस्य सुवर्णाभस्य हस्तिजः । षड्दन्तस्य हि भद्रस्य औपवाह्यश्च वै बलः ॥ २१२
तस्य पुत्रोऽञ्जनश्चैव सुप्रतीकोऽथ वामनः । पद्मश्चैव चतुर्थोऽभूद्धस्तिनी चाभ्रमुस्तथा ॥ २१३
दिग्गजांस्तांश्च चत्वा(तु)रः श्वेताऽजनयताऽऽशुगान् । भद्रं मृगं च मन्दं च संकीर्णं चतुरः सुतान्
संकीर्णोऽप्यञ्जनो यस्तु उपवाह्यो यमस्य तु । भद्रो यः सुप्रतीकस्तु हरितः स ह्यपांपतेः ॥ २१५
पद्मो मन्दस्तु यो गौरो द्विपो ह्यैलविलस्य सः । मृगः श्यामस्तु यो हस्ती उपवाह्यः स पावकेः॥
पद्मोत्तरस्तु यः पद्मो गजो वै वरुणो गणः । उपलेपनमेपश्च तस्याष्टौ जज्ञिरे सुताः ॥ २१७
उदग्रभावेनोपेता जायन्ते तस्य चान्वये । श्वेतवालनखाः पिङ्गा वर्ष्मवन्तो मतङ्गजाः ॥
मतङ्गजान्प्रवक्ष्यामि नागानन्यानपि क्रमात् ॥ २१८
कपिलः पुण्डरीकश्च सुमनाभो रथान्तरः । जातौ नाम्ना सुतौ ताभ्यां सुप्रतिष्ठप्रमर्दनौ ॥ २१९
शूलाः स्थूलाः शिरोदान्ताः शुद्धवालनखास्तथा । बलिनः शक्तिनश्चैव स्मृतास्त्वाकुलिका गजाः
पुष्पदन्तो बृहत्सामा षड्दन्तो दन्तपुष्पवान् । ताम्रवर्णी च तत्पुत्रः सहचारिविपाणितः ॥२२१
अन्वये चास्य जायन्ते लम्बोष्ठाश्चारुदर्शिनः । श्यामाः सुदर्शनाश्चण्डा नानापीडायताननाः ॥
वामदेवोऽञ्जनश्यामः साम्नो जज्ञेऽथ वामनः । भार्या चैवाङ्गदा तस्य नीलवल्लक्षणौ सुतौ ॥
चण्डाश्चारुशिरोग्रीवा व्यूढोरस्कास्तरस्विनः । नैर्वद्धाः कुले तेषां जायन्ते विकृता गजाः॥२२४
सुप्रतीकस्तु रूपेण नास्त्यस्य सदृशो गजः । तस्य महारी संपाती पृथुश्चित्तिसुतास्त्रयः ॥ २२५
पशवो दीर्घताल्वोष्ठाः सुविभक्तशिरोदराः । जायन्ते मृदुसंभूता वंशे तस्य मतङ्गजाः ॥ २२६
अञ्जनादञ्जना साम्नो विजज्ञे चाञ्जनावती । + एवं माता तयोश्चापि प्रथितावुरजः सुतौ ॥
महाविभक्तशिरसः स्निग्धजीमूतसंनिभाः । सुदर्शनाः सुवर्ष्माणः पद्माभाः परिमण्डलाः ॥
शूनाः पीतायतमुखा गजास्तस्यान्वयेऽभवन् ॥ २२८
जज्ञे चन्द्रमसः साम्नः पिङ्गला कुमुदद्युतिः । पिङ्गलायाः सुतौ तस्या महापद्मोर्मिमालिनौ ॥
समायवरदांश्चण्डान्महद्धवलिनोदरान् । हस्तियुद्धे प्रियान्नागान्विद्धि तस्य कुलोद्भवान् ॥ २३०

---

* इदमर्धं नास्ति घ. पुस्तके । + एतदर्धस्थाने इदमर्धं 'पवंनाना तयोश्चापि प्रथिताः पुष्पनः सुतौ' इति ख. घ ङ. पुस्तकेषु ।

---

१ ख. मयुः । ग. घ. माय- । २ ङ. प्रस्तूय' । ३ ङ. 'णों व्यञ्ज° । ४ ख. ह्यैडविडस्य । ५ ख. °तरः पद्मगु फ. स गजो व ह' । घ. ङ °तर. पद्मगु को दिग्गजो वाह' । ६ ख. ग. घ. ङ. 'गिनः । अ. ° । ७ ख. ग. घ. 'दर्शनाः । श्यामास्त्वग्दर्शनाश्चण्डा नानापीनाय° । ८ घ पति पृ° । ९ ख. ग. घ. ङ. 'जन सा° । १० घ. ङ. 'ण्डान्गुरुद्धवलिनो हरीन् । ह° ।

( कश्यपीयप्रजासर्गः )

एतान्देवासुरे युद्धे जयार्थे जगृहुः सुराः । कृतार्थैश्च विसृष्टास्तैः पूर्वोक्ताः प्रययुर्दिशः ॥ २३१
एतेषामन्वये जातान्विनीतांस्त्रिदशा ददुः । अङ्गाय लोमपादाय सूत्रकाराय वै द्विपान् ॥ २३२
द्विरदो द्विरदाभ्यां च हस्ताद्धस्ती करात्करी । वरणाद्वारणो दन्ती दन्ताभ्यां गर्जनाद्गजः ॥
कुञ्जरः कुञ्जचारित्वान्नागो नगविरोधतः । मत्वा यातीति मातङ्गो द्विपो द्वाभ्यां पिबन्स्मृतः ॥
सामजः सामजातत्वादिति निर्वचनक्रमः ॥ २४५

एषां जिह्वापरावृत्तिर्(र)वाक्त्वं ह्यग्निशापजम् । वलस्यानवतो या तु या चैषां गूढमुष्कता ॥
उभयं दन्तिनामेतत्स्वयंभूसुरशापजम् ॥ २३६
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः । कन्यासु जाता दिग्नागैर्नानासत्त्वास्ततो गजाः ॥
संभूतिश्च प्रभूतिश्च नागनिर्वचनं तथा । एतद्गजानां विज्ञेयं येषां राजा विभावसुः ॥ २३७
कौशिकाद्याः समुद्रात्तु गङ्गायास्तदनन्तरम् । अञ्जनस्यैकमूलस्य प्राच्यान्नागवनं तु तत् ॥ २३८
उत्तरा तस्य विन्ध्यस्य गङ्गाया दक्षिणं च यत् । गङ्गोद्भेदात्करूषेभ्यः सुप्रतीकस्य तद्वनम् ॥
अपरेणोत्कलाश्चैव ह्यावेदिभ्यश्च पश्चमम् । ऐकभूत्रात्मजस्यैतद्वामनस्य वनं स्मृतम्(?) ॥ २४०
अपरेण तु लौहित्यमासिन्धोः पश्चिमेन तु । यमस्यैतद्वनं प्रोक्तमनुपर्वतमेव तत् ॥ २४१
भूर्तिर्विजज्ञे भूतांश्च रुद्रस्यानुचरान्प्रभो । स्थूलान्कृशांश्च दीर्घांश्च वामनान्ह्रस्वकान्समान् ॥
लम्बकर्णान्प्रलम्बोष्ठाँल्लँम्बजिह्वास्तनोदरान् । एकरूपान्विरूपांश्च लम्बस्फिक्स्थूलपिण्डिकान् ॥
सरोवरसमुद्रादिनदीपुलिनवासिनः । कृष्णान्गौरांश्च नीलांश्च श्वेतांश्च लोहितारुणान् ॥ २४५
बभ्रूंश्च शबलान्धूम्रान्कद्रूंरोसदारुणान् । मुञ्जकेशान्हृषीकेशान्सर्पयज्ञोपवीतिनः ॥ २४६
विरूपाक्षान्विरूपाक्षान्कृशाक्षानेकलोचनान् । बहुशीर्षान्विशीर्षांश्च एकशीर्षानशीर्षकान् ॥
चण्डांश्च विकटांश्चैव विरोमान्रोमशांस्तथा । अन्धांश्च जटिलांश्चैव कुब्जान्हेपकवामनान् ॥ २४७
सरोवरसमुद्रादिनदीपुलिनसेविनः । एककर्णान्महाकर्णाञ्शङ्कुकर्णानकर्णिकान् ॥ २४८
दंष्ट्रिणो नखिनश्चैव निर्दन्तांश्च द्विजिह्वकान् । एकहस्तान्द्विहस्तांश्च त्रिहस्तांश्चाप्यहस्तकान् ॥
एकपादान्द्विपादांश्च त्रिपादान्बहुपादकान् । महायोगान्महासत्त्वान्सुतपस्कान्महाबलान् ॥ २५०
सर्वगानप्रतिघान्ब्रह्मज्ञान्कामरूपिणः । घोरान्क्रूरांश्च मेध्यांश्च शिवान्पुण्यान्सवादिनः ॥ २५१
कुशहस्तान्महाजिह्वान्महाकर्णान्महाननान् । हस्तादांश्च मुखादांश्च शिरोदांश्च कपालिनः॥ २५२
धन्विनो मुद्गरधरानसिशूलधरांस्तथा । दीप्तास्यान्दीप्तनेत्रांश्च चित्रमाल्यानुलेपनान् ॥ २५३
अन्नादान्पिशितादांश्च बहुरूपान्सुरूपकान् । रात्रिसंध्याचरान्घोरान्कांश्चित्सौम्यान्दिवाचरान् ॥
नक्तंचरान्सुदुःप्रेक्ष्यान्घोरांस्तान्वै निशाचरान् ॥ २५४
परत्वे च भवं देवं सर्वे ते गतमानसाः । नैषां भार्याऽस्ति पुत्रो वा सर्वे ते ह्यूर्ध्वरेतसः ॥ २५५
शतं तानि सहस्राणि भूतानामात्मयोगिनाम् । एते सर्वे महात्मानो भूत्याः पुत्राः प्रकीर्तिताः ॥
कपिशी जज्ञे कूष्माण्डी कूष्माण्डाञ्जज्ञिरे पुनः । मिथुनानि पिशाचानां वर्णेन कपिशेन च ॥
कपिशत्वात्पिशाचास्ते सर्वे च पिशिताशनाः ॥ २५७

१ ग. घ. ङ. [illegible] । २ क. [illegible] । ३ ग. घ. [illegible] । ४ क. [illegible] । ५ ए. प्रभूति° । ६ ग. घ. [illegible] । ङ. [illegible] । ७ घ. [illegible] । ८ ग. ग. घ. ङ. तु । पक्वौ° । ९ ङ. [illegible] । १० ग. घ. [illegible] । ११ ङ. [illegible] । १२ क. [illegible] । १३ ग. घ. [illegible] । १४ ङ. [illegible] । १५ ङ. [illegible] । १६ क. [illegible] ।

. ( कश्यपीयप्रजासर्गः )

युग्मानि षोडशान्यानि वर्तमानास्तदन्वयाः । नामतस्तान्प्रवक्ष्यामि पुरुषादांस्तदन्वयान् ॥
छगलश्छगली चैव वक्रो वक्रमुखी तथा । षोडशानां गणा चैव सूची सूचीमुखस्तथा ॥ २५९
कुम्भपात्रश्च कुम्भी च वज्रदंष्ट्रश्च दुन्दुभिः । उपचारोऽपचारश्च उलूखल उलूखली ॥ २६०
अनर्कश्च अनर्का च कुखण्डश्च कुखण्डिका । पाणिपात्रः पाणिपात्री पांशुः पांशुमती तथा ॥
नितुण्डश्च नितुण्डी च निपुणा निपुणस्तथा । छलादोच्छेपणा चैव प्रस्कन्दः स्कन्दिका तथा ॥
षोडशानां पिशाचानां गणाः प्रोक्तास्तु षोडश ॥ २६२
अजामुखा वक्रमुखाः पूरिणः स्कन्दिनस्तथा । विपादाङ्गारिकाश्चैव कुम्भपात्राः प्रकुन्दकाः ॥
उपचारोलूखलिका ह्यनर्काश्च कुखण्डिकाः । पाणिपात्राश्च नैतुण्डा ऊर्णाशा निपुणास्तथा ॥
सूचीमुखोच्छेपणादाः कुलान्येतानि षोडश । इत्येता ह्यभिजातास्तु कूष्माण्डानां प्रकीर्तिताः ॥
पिशाचास्ते तु विज्ञेयाः सकुल्या इति जज्ञिरे । बीभत्सं विकृताचारं पुत्रपौत्रमनन्तकम् ॥
अतस्तेषां पिशाचानां लक्षणं च निबोधत ॥ २६६
सर्वाङ्गकेशा वृत्ताक्षा दंष्ट्रिणो नखिनस्तथा । तिर्यङ्गाः पुरुषादाश्च पिशाचास्ते ह्यधोमुखाः ॥
अकेशका ह्यरोमाणस्त्वग्वसाश्चर्मवाससः । कूष्माण्डिकाः पिशाचास्ते तिलभक्षाः सदामिषाः ॥
वक्राङ्गहस्तपादाश्च वक्रशीलागतास्तथा । ज्ञेया वक्रपिशाचास्ते वक्रगाः कामरूपिणः ॥ २६९
लम्बोदरास्तुण्डनाशा ह्रस्वकायशिरोभुजाः । नितुन्दकाः पिशाचास्ते तिलभक्षाः प्रियश्रवाः ॥
वामनाकृतयश्चैव वाचालाः स्रुतगामिनः । पिशाचानर्कमर्कास्ते वृक्षवासादनप्रियाः ॥ २७१
ऊर्ध्वबाहूर्ध्वरोमाणो उद्वृत्ताश्च तथालयाः । मुञ्चन्ति पांशूनङ्गेभ्यः पिशाचाः पांशवश्च ते ॥ २७२
धर्मनीमन्तकाः शुष्काः श्मश्रुलाश्चीरवाससः । उपवीराः पिशाचाश्च श्मशानायतनास्तथा ॥ २७३
विष्टब्धाक्षा महाजिव्हा लेलिहाना ह्युलूखलाः । ह्रस्वपृष्ठस्थूलशिरसो विरता बद्धपिण्डकाः ॥
पिशाचाः कुम्भपात्रास्ते अदृष्टान्नानि भुञ्जते । सुक्ष्मास्तु रोमशाः पिङ्गा दृष्टादृष्टाश्चरन्ति वै ॥
अयुक्तांश्च विशन्तीह निपुणास्ते पिशाचकाः । आकर्णदारितास्याश्च लम्बभ्रूस्थूलनासिकाः ॥
* शून्यागाराश्रयाः स्थूलाः पिशाचाः पूरणास्तु ते । हस्तपादाक्रान्तेगणा ह्रस्वकाः क्षितिदृष्टयः ॥
बालादास्ते पिशाचा वै सूतिकागृहसेविनः ॥ २७७
पृष्ठतःपाणिपादाश्च ह्रस्वका वातरंहसः । पिशितादाः पिशाचास्ते सङ्ग्रामे रुधिराशिनः ॥ २७८
नग्नका ह्यनिकेताश्च लम्बकेशाश्च पिण्डकाः । पिशाचाः स्कन्दिनस्ते वै अन्या उच्छेपणाशिनः ॥
षोडश जातयस्तेषां पिशाचानां प्रकीर्तिताः ॥ २७९
एवंविधान्पिशाचांस्तु दीनान्दृष्ट्वाऽनुकम्पया । तेभ्यो ब्रह्मा वरं प्रादात्कारुण्यादल्पचेतसः ॥
अन्तर्धानं प्रजास्तेषां कामरूपत्वमेव च ॥ २८०

---

* इदमर्धं नास्ति क. पुस्तके ।

---

१ ख. ग. घ. °ना रणा । २ ग. घ. ङ. °वगणर्कक° । ३ ख. घ. छ. निरुन्दश्च निरुन्दी च । ४ क. °खा वक्रमु° । ५ ख. घ. ङ. प्रहन्द° । ६ ख. ङ. पवीरो° । ७ ख. घ. ङ. °श्च वै तु° । ८ क. °याः सुकल्या इ° । ९ ङ. शादशा° । १० ख. ग. ङ. °र्कमार्का° । ११ क. °ण ऊर्ध्ववृक्षास्तथा । १२ क. मतकाः । १३ क. हुहस° । १४ ख. घ. ङ. °रतोब्दद° । १५ ख. घ. ङ. °न्तरगाः । १६ ग. घ. ङ. °म्बशेगाश्चपिण्डिकाः । १७ क. उच्छ्वसनाशि° । १८ ख. घ. ङ. °दशान्यास्तु जात्योऽश दि° ।

उभयोः संध्ययोश्चारं स्थानान्याजीवमेव च। गृहाणि यानि भग्नानि शून्यान्यल्पजनानि च॥
विध्वस्तानि च यानि स्युरनाचारोषितानि च। असंसृष्टोपलिप्तानि संस्कारैर्वर्जितानि च॥
राजमार्गोपरथ्याश्च निष्कुटाश्चत्वराणि च। द्वाराण्यट्टालकाश्चैव निर्गमान्संक्रमांस्तथा॥ २८३
पथो नद्योऽथ तीर्थानि चैत्यवृक्षान्महापथान्। पिशाचा विनिविष्टा वै स्थानेष्वेतेषु सर्वशः॥
अधार्मिका जनास्ते वै आजीवा विहिताः सुरैः। वर्णाश्रमाः संकरिकाः कारुशिल्पिजनास्तथा॥
अनृतोपमसत्त्वानां चौरविश्वासघातिनाम्। एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः॥
आरभन्ते क्रिया यास्तु पिशाचास्तत्र देवताः॥ २८६
मधुमांसौदनैर्दध्ना तिलचूर्णसुरासवैः। धूपैर्हारिद्रकृशरैस्तैलभेद्रगुडौदनैः॥ २८७
कृष्णानि चैव वासांसि धूपाः सुमनसस्तथा। एवं युक्ताः सुबलयस्तेषां वै पर्वसंधिषु॥
पिशाचानामनुज्ञाय ब्रह्मा सोऽधिपतिर्ददौ॥ २८८
सर्वभूतपिशाचानां गिरिशं शूलपाणिनम्। दंष्ट्री त्वजनयत्पुत्रान्व्याघ्रान्सिंहांश्च भामिनी॥ २८९
द्विपिनश्च सुतास्तस्य व्यालेयाश्चाऽऽमिषाशिनः। ऋषायाश्चापि कार्त्स्न्येन प्रजासर्गं निबोधत॥
तस्या दुहितरः पञ्च तासां नामानि मे शृणु॥ २९०
मीना माता तथा वृत्ता परिवृत्ता तथैव च। अनुवृत्ता तु विज्ञेया तासां वै शृणुत प्रजाः॥ २९१
सहस्रदन्ता मकराः पाठीनास्तिमिरोहिताः। इत्येवमादिर्हि गणो मैनो विस्तीर्ण उच्यते॥ २९२
ग्राहाश्चतुर्विधा ज्ञेया तथाऽनुज्येष्ठका अपि। निष्कांश्च शिशुमारांश्च मीना व्यजनयत्प्रजाः॥
वृत्ता कूर्मविकाराणि नैकानि जलचारिणाम्। तथा शङ्खविकाराणि जनयामास नैकशः॥ २९४
मण्डूकानां विकाराणि अनुवृत्ता व्यजायत। ऐणेयानां विकाराणि शम्बूकानां तथैव च॥
तथा शुक्तिविकाराणि वराटककृतानि च। तथा शङ्खविकाराणि परिवृत्ता व्यजायत॥ २९६
कालकूटविकाराणि जलौकविहितानि च। इत्येष हि ऋषेर्वंशः पञ्च शाखाः प्रकीर्तिताः॥ २९७
तिर्यग्धेतुक्रमाद्याहुर्बहुलं(?) वंशविस्तरम्। संस्वेदजविकाराणि यथा येभ्यो भवन्ति ह॥ २९८
स्वस्तिपिकशरीरेभ्यो जायन्त्युत्पादका द्विजाः। मनुष्याः स्वेदमलजा उशना नाम जन्तवः॥
[*तथा शिरसि चैले च यूकाः संस्वेदजाः स्मृताः। चन्द्रादित्याभितप्तायां पृथिव्यां संभवन्ति ये॥
तृणधेयपसिक्तायाः स्मृताः संस्वेदजन्तवः।] नानापिपीलिकगणाः कीटका बहुपादकाः॥
शङ्खोपलविकाराणि कीलकाचारकाणि च। इत्येवमादिर्बहुलाः स्वेदजाः पार्थिवा गणाः॥ ३०२
तथा घर्माभितप्तेभ्यस्त्वङ्भ्यो वृष्टिभ्य एव च। नैका मृगशरीरेभ्यो जायन्ते जन्तवस्त्विमे॥
मीनैकाः पिप्लला दंशास्तथा तित्तिरपुत्रिकाः। नीलचित्राश्च जायन्ते शलका बहुविस्तराः॥
जलजाः स्वेदजाश्चैव जायन्ते जन्तवस्त्विमे। काशतोपञ्ज(ज)काः कीटानलदा बहुपादकाः॥
सिद्दला रोमलाश्चैव पिच्छलाः परिकीर्तिताः। इत्येवमादिर्हि गणो जलजः स्वेदजः स्मृतः॥
सर्पिभ्यो माषमुद्गानां जायन्ते क्रमशस्तथा। बिल्वजम्ब्वाम्रपूगेभ्यः फलेभ्यश्चैव जन्तवः॥ ३०७

* धनुश्चिह्नान्तर्गतग्रन्थः क. ग पुस्तकयोर्नास्ति।

१ घ. ट. °आजीवा विहिताः सु°। २ ख ग. ङ. मधुमु°। ३ क. दष्ट्रा। ४ क °रात्या व्या। ५ क. ऋषयश्चा°। ६ क. °रात्मामर्गे°। ७ ख. ङ. °था लीनोऽपरा। ग. °था चोलिता। ८ क. °ध गाता व्य°। ९ ख. ग. ब. ङ. °जानाम°। १० ख. घ. °शाखाः प्रकीर्तिताः। नि°। ११ ग. घ. ङ. °ष्का विद्रुमा। १२ क. °पंडन°।

(कश्यपीयप्रजासर्गः)

मुद्गेभ्यः पनसेभ्यश्च तण्डुलेभ्यस्तथैव च। तथा कोटरशुष्केभ्यो निहितेभ्यो भवन्ति हि ॥ ३०८
अन्येभ्योऽपि च जायन्ते न हि तेभ्यश्चिरं सदा। जन्तवस्तुरगादिभ्यो विषादिभ्यस्तथैव च ॥
बहून्यहानि निक्षिप्ते संभवन्ति च गोमये। जायन्ते कृमयो विप्राः काष्ठेभ्यश्च घुणादयः ॥ ३१०
कृमा द्रुमाणां जायन्ते त्रिविधा नीलमक्षिकाः। तथा शुष्कविकारेभ्यः पुत्रिकाः प्रभवन्ति च ॥
कालिकाः शतिकेभ्यश्च सर्पा जायन्ति सर्वशः। संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ॥
(* गोभ्यो हि पहिषेभ्यश्च जायन्ते जन्तवः प्रभो। मत्स्यादयश्च विविधा अण्डकुक्षौ विशेषतः ॥
चैवीरिकाश्च जायन्ते तथा गोजाकुलानि च। तथाऽन्यानि च सूक्ष्माणि जलौकादीनि जातयः
[+कपोतकुररादिभ्यः सूक्ष्मा यूकास्तथैव च। × तथैवान्येऽपि संख्याता अष्टापदकलीरकाः] ॥
मक्षिकाणां विकाराणि जायन्ते जातयोऽपरे। ) प्रायेण तु वसन्त्यस्मिन्नुच्छिष्टोदककर्दमे ॥
मशकानां विकाराणि भ्रमराणां तथैव च। तृणेभ्यः समजायन्त पुत्रिकाः पुत्रसप्तकाः ॥ ३१७
मणिच्छेदास्तथा व्यालाः पोतजाः परिकीर्तिताः। शतवेरिविकाराणि करीषेभ्यो भवन्ति हि ॥
एवमादिरसंख्यातो गणः संस्वेदजो मया। समासाभिहितो ह्येष प्राकर्षवशजः स्मृतः ॥ ३१९
तथाऽन्ये नैर्ऋताः सत्त्वास्ते स्मृता उपसर्गजाः। पूतास्तु योनिजाः केचित्केचिद्दौत्पत्तिकाः स्मृताः
प्रायेण देवाः सर्वे वै विज्ञेया ह्युपपत्तिजाः। केचित्तु योनिजा देवाः केचिद्देवानिमित्ततः ॥ ३२१
तुलालोघश्च कोलश्च शिवा कन्या तथैव च। अपत्यं सरमायास्तु गणा वै सरमादयः ॥ ३२२
श्यामश्च शबलश्चैव अर्जुनो हरितस्तथा। कृष्णो धूम्रारुणश्चैव तुलालावृश्च कद्रुकाः ॥ ३२३
सुरमाऽथ विजज्ञे तु शतमेकं शिरोमृनम्। सर्पाणां तक्षको राजा नागानां चापि वासुकिः ॥
तमोबहुल इत्येष गणः क्रोधवशात्मकः ॥ ३२४
पुलहस्याऽऽत्मजास्सर्गास्ताम्रायास्तन्निबोधत। बह्व्यस्त्वभिविख्यातास्ताम्रायाश्च विजज्ञिरे ॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा। अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ
संपातिं च जटायुं च प्रसूता पक्षिसत्तमौ ॥ ३२६
संपातिरजनत्पुत्रं कन्यामेकां तथैव च। जटायुषश्च ये पुत्राः काकगृध्राश्वकर्णिनः ॥ ३२७
भार्या गरुत्मतश्चापि भासी क्रौञ्ची तथा शुकी। धृतराष्ट्री च भद्रा च तास्वपत्यानि वक्ष्यते (चक्ष्महम्) ॥
शुकी गरुत्मतः पुत्रान्सुषुवे प्रद परिश्रुतान्। त्रिशिरं सुमुखं चैव बलं पृष्ठं महाबलम् ॥ ३२९
त्रिशङ्कुनेत्रं सुमखं सुरूपं सुरसं बलम्। एषां पुत्राश्च पौत्राश्च गरुडानां महात्मनाम् ॥ ३३०
चतुर्दश सहस्राणि क्रूराणां पन्नगाशिनाम्। पुत्रपौत्रविसर्गाच्च तेषां वै वंशविस्तरः ॥ ३३१
व्याप्तानि यानि देशानि (स्थानानि) तानि वक्ष्ये यथाक्रमम्। शाल्मलिद्वीपमखिलं देवकूटं च पर्वतम्

* धनुश्चिह्नान्तर्गतग्रन्थो ध. पुस्तके नास्ति। + धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके नास्ति। × इदमर्धं नास्ति ङ पुस्तके।

१ ग. ङ. °न्ते क्रिमि°। २ ख. यः। कृमीणा जायते त्रेया विधि°। ३ ख. घ. ङ °कानि°। ४ ग. ङ अन्तकु°। ५ ग. ङ. °तः। चेचीरि°। ६ ग लीवरा°। मं°। ७ ख. ङ. मासिकाः। ८ ख. ग. ङ. °दारुणा व्या। ९ क ग. °णि किरी°। १० ख. ङ. °लाघ श्च°। ११ ख. °व हलालावृ। घ. °बहुलालावृश्च। ङ. °व इलालावृश्च क-स्यपा। १२ क. °रोमत°। १३ ख. ग. घ. ङ. °त। पट्कन्या°। १४ ख. °तिर्जनयत्कन्या द्विरदा. सपत्नाश्च ये। ज°। घ. °तिर्जनयत्कन्या द्विरद- मथमश्च ये। च°। १५ ग. घ. ङ. वराङ्गु°। १६ ग. ङ. नि दिशास्तु ता।

मणिमन्तं च शैलेन्द्रं सहस्रशिखरं तथा । पर्णमालं सुकेशं च शतशृङ्गं तथाऽचलम् ॥ ३३३
कौरजं पञ्चशिखरं हेमकूटं च पर्वतम् । प्रचण्डवायुप्रभवैर्दीपितैः पद्मरागिभिः ॥ ३३४
शैलजालानि व्याप्तानि गारुडैस्तैर्महात्मभिः । भासीपुत्राः स्मृता भासा उलूकाः काककुकुटाः ॥
मयूराः कलविङ्काश्च कपोता लावतित्तिराः । * क्रौञ्ची वार्ध्रीणसाञ्छ्येनी कुररान्सारसान्बकान्
इत्येवमादयोऽन्येऽपि क्रव्यादा ये च पक्षिणः । धृतराष्ट्री च हंसांश्च कलहंसांश्च भामिनी ॥ ३३७
चक्रवाकांश्च विहगान्सर्वांश्चैवादकान्द्विजान् । एतानेव विजज्ञेऽथ पुत्रपौत्रमनन्तकम् ॥ ३३८
गरुडस्याऽऽत्मजाः प्रोक्ता इरायाः शृणुत प्रजाः । इरा प्रजज्ञे कन्या वै तिस्रः कमललोचनाः ॥
वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः । लता चैवाथ वल्ली च वीरुधा चेति तास्तु वै ॥ ३३९
लता वनस्पतीञ्जज्ञे ह्यपुष्पान्पुलिनस्थितान् । युक्तान्पुष्पफलैर्वृक्षाँल्लता वै संप्रसूयते ॥ ३४०
अथ वल्ली तु गुल्मांश्च त्वक्सारास्तृणजातयः । वीरुधा तदपत्यानि वंशश्चात्र समाप्यते ॥ ३४१
एते कश्यपदायादा व्याख्याताः स्थाणुजङ्गमाः । तेषां पुत्राश्च पौत्राश्च यैरिदं पूरितं जगत् ॥
इति सर्गैकदेशस्य कीर्तितोऽवयवो मया । मारीचोऽयं प्रजासर्गः समासेन प्रकीर्तितः ॥
न शक्यं व्यासतो वक्तुमपि वर्षशतैर्द्विजाः ॥ ३४३
अदितिर्धर्मशीला तु बलशीला दितिः स्मृता । तपःशीला तु सुरभिर्मायाशीला दनुः स्मृता ॥
[+मुनिश्च गन्धशीला वै भावाध्ययनशालिनी । गीतशीला त्वरिष्टाऽथ क्रोधशीला खशा स्मृता]
क्रूरशीला तथा कद्रुः क्रौञ्च्यथ श्रुतिशालिनी । इराऽनुग्रहशीला तु दनायुर्भक्षणे रता ॥ ३४६
वाहशीला तु विनता ताम्रा वै पाशशालिनी । स्वभावा लोकमातॄणां शीलान्येतानि सर्वशः ॥
धर्मतः शीलतो बुद्ध्या क्षमया बलरूपतः । रजःसत्त्वतमोद्वृत्ता धार्मिकाधार्मिकास्तु वै ॥ ३४७
मातृतुल्याश्चाभिजाताः कश्यपस्याऽऽत्मजाः प्रजाः । देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः ॥
पिशाचाः पशवश्चैव मृगाः पतगवीरुधः ॥ ३४८
यस्माद्दाक्षायणीष्वेते जज्ञिरे मानुषीष्विह । मन्वन्तरेषु सर्वेषु तस्माच्छ्रेष्ठास्तु मानुषाः ॥ ३४९
*धर्मार्थकाममोक्षाणां मानुषाः साधकास्तु वै । ततोऽधःस्रोतसस्ते वै उत्पद्यन्ते सुरासुराः ॥*
जायन्ते कार्यसिद्ध्यर्थं मानुषेषु पुनः पुनः । इत्येव वंशप्रभवः प्रसंख्यातस्तपस्विनाम् ॥ ३५१
सुराणामसुराणां च गन्धर्वाप्सरसां तथा । यक्षरक्षःपिशाचानां सुपर्णोरगपक्षिणाम् ॥ ३५२
व्यालानां शिखिनां चैव ओषधीनां च सर्वशः । कृमिकीटपतङ्गानां क्षुद्राणां जलजाश्च ये ॥
पशूनां ब्राह्मणानां च श्रीमतां पुण्यलक्षणः ॥ ३५३
आयुष्यश्चैव धन्यश्च श्रीमान्हितसुखावहः । श्रोतव्यश्चैव सततं ग्राह्यश्चैवानसूयता ॥ ३५४
इमं तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणवर्यसंसदि ।
अपत्यलाभं हि लभेत पुष्कलं श्रियं धनं प्रेत्य च शोभनां गतिम् ॥ ३५५

इति श्रीमहापुराणे वायुप्रोक्त उपोद्घातपादे कश्यपीयप्रजासर्गो नाम नवषष्टितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६५०६

---

* एतदर्धस्थाने 'क्रौञ्चा वार्ध्रीणसाः श्येना कुरराः सारसा बकाः' इति ख. ग. घ. ङ. पुस्तकेषु ।
+ धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

१ ख. ङ. ना । लावत्तोऽव मु° । २ ध. च. ङ. °दरारादयो हि म° । ३ ग. कद्रुः शोभी च मु । घ.
कद्रुः शोभी च पु° । ४ ङ. °रा प्रहर्षी ।

अथ सप्ततितमोऽध्यायः ।

ऋषिवंशानुकीर्तनम् ।

सूत उवाच—

एवं प्रजासु सृष्टासु कश्यपेन महात्मना । प्रतिष्ठितासु सर्वासु स्थावरासु चरासु च ॥ १
अभिषिच्याधिपत्येषु(?) तेषां मुख्यः प्रजापतिः । ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥ २
द्विजातीनां वीरुधां च नक्षत्राणां ग्रहैः सह । यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत् ॥ ३
बृहस्पतिं तु विश्वेषां ददावङ्गिरसां पतिम् । भृगूणामधिपं चैव काव्यं राज्येऽभ्यषेचयत् ॥ ४
आदित्यानां पुनर्विष्णुं वसूनामथ पावकम् । प्रजापतीनां दक्षं च मरुतामथ वासवम् ॥ ५
दैत्यानामथ राजानं प्रह्लादं दितिनन्दनम् । नारायणं तु साध्यानां रुद्राणां वृषभध्वजम् ॥ ६
विप्रचित्तिं च राजानं दानवानामथाऽऽदिशत् । अपां तु वरुणं राज्ये राज्ञां वैश्रवणं पतिम् ॥
यक्षाणां राक्षसानां च पार्थिवानां धनस्य च ॥ ७
वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत् । सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ॥ ८
शैलानां हिमवन्तं च नदीनामथ सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं तदा ॥ ९
उच्चैःश्रवसमश्वानां राजानं चाभ्यषेचयत् । मृगाणामथ शार्दूलं गोवृषं च चतुष्पदाम् ॥ १०
पक्षिणामथ सर्वेषां गरुडं पततां वरम् । गन्धानां मारुतं चैव भूतानामशरीरिणाम् ॥ ११
शब्दाकाशबलानां च वायुं बलवतां वरम् । सर्वेषां दंष्ट्रिणां शेषं नागानामथ वासुकिम् ॥ १२
सरीसृपाणां सर्पाणां नागानां चैव तक्षकम् । सागराणां नदीनां च मेघानां वर्षितस्य च ॥
आदित्यानामन्यतमं पर्जन्यमभिषिक्तवान् ॥ १३
सर्वाप्सरोगणानां च कामदेवं तथैव च । ऋतूनामथ मासानामार्तवानां तथैव च ॥ १४
पक्षाणां च विपक्षाणां मुहूर्तानां च पर्वणाम् । कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा ॥
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम् ॥ १५
प्रजापतिर्वै रजसः पूर्वस्यां दिशि विश्रुतम् । पुत्रं नाम्ना सुधामानं राजानं सोऽभ्यषेचयत् ॥ १६
पश्चिमस्यां(मायां) दिशि तथा रजसः पुत्रमच्युतम् । केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत्
मनुष्याणामधिपतिं चक्रे वैवस्वतं मनुम् । तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ॥ १८
स्वायंभुवेऽन्तरे पूर्वं ब्रह्मणा तेऽभिषेचिताः । नृपा ह्येतेऽभिषिच्यन्ते मनवो ये भवन्ति वै ॥
मन्वन्तरेष्वतीतेषु गता ह्येषु पार्थिवाः । एवमन्येऽभिषिच्यन्ते प्राप्ते मन्वन्तरे पुनः ॥
अतीतानागताः सर्वे स्मृता मन्वन्तरेश्वराः ॥ २०
राजसूयेऽभिषिक्तश्च पृथुरेभिर्नरोत्तमैः । वेददृष्टेन विधिना कृतो राजा प्रतापवान् ॥ २१
एतानुत्पाद्य पुत्रांस्तु प्रजासंतानकारणात् । पुनरेव महाभागः प्रजानां पतिरीश्वरः ॥ २२
कश्यपो गोत्रकामस्तु चचार परमं तपः । पुत्रौ गोत्रकरौ मह्यं भवेतामित्यचिन्तयत् ॥ २३

१ ख. ङ. प्रह्रादं । २ ग. घ. ङ. °शब्दकाशबला° । ३ ख. घ. ङ. तथा प्रभुम् । ऋ° । ४ क. °के चैव मनुं । ५ ख. घ. ङ. °तपः । चे° ।

रक्षणं चैव श्राद्धस्य आतिथ्यं च विधिद्वयम् । भूतानां देवतानां च पितॄणां श्राद्धकर्मणि ॥
एवं विधिकृतः(तं)सम्यक्सर्वमेतद्भविष्यति॥ १५
एवं दत्त्वा वरं तेषां ब्रह्मा पितृगणैः सह । भूतानुग्रहकृद्देवः संचचार यथासुखम् ॥ १६
वेदे पञ्च महायज्ञा नराणां समुदाहृताः । एतान्पञ्च महायज्ञान्निर्वपेत्सततं नरः ॥ १७
यत्र यास्यन्ति दातारः संस्थानं वै निबोधत । निर्भयं निरहंकारं निःशोकं निष्प्रपञ्चकम् ॥
ब्रह्मस्थानमवाप्नोति सर्वकामपुरस्कृतम् ॥ १८
शूद्रेणापि प्रकर्तव्याः पञ्चैते मन्त्रवर्जिताः । अतोऽन्यथा तु यो भुङ्क्ते स ऋणं नित्यमश्नुते ॥ १९
ऋणं च भुङ्क्ते पापात्मा यः पचेदात्मकारणात् । तस्मान्निर्वर्तयेत्पञ्च महायज्ञान्सदा बुधः ॥ २०
नैवेद्यं केचिदिच्छन्ति जीवत्स्वपि प्रयत्नतः । उदकपूर्वं बलिं कुर्यादुदकुम्भं तथैव च ॥ २१
बलिं सुविदितं कुर्यादुच्चादुच्चतरं क्षिपेत् । परशृङ्गगवां पूर्वं बलिं सूक्ष्मं समुत्क्षिपेत् ॥ २२
न निवेद्यो भवेत्पिण्डः पितॄणां यस्तु जीवति । इष्टेनान्नेन भक्ष्यैश्च भोजयेत यथाविधि ॥
विधानं वेदविहितमेतद्वक्ष्यामि यत्नतः ॥ २३
देवदेवा महात्मानो ह्येतेऽपि पितरो ह्युत । इच्छन्ति केचिदाचार्याः पश्चात्पिण्डनिवेदनम् ॥ २४
पूजनं चैव विप्राणां पूर्वमेव हि नित्यशः । तद्विधर्मार्थकुशलानित्युवाच बृहस्पतिः ॥ २५
पूर्वं निवेदयेत्पिण्डं पश्चाद्विप्रांश्च भोजयेत् । योगात्मानो महात्मानः पितरो योगसंभवाः ॥
सोममाप्याययन्त्येते पितरो योगमास्थिताः ॥ २६
तस्माद्दद्याच्छुचिः पिण्डान्योगिभ्यस्तत्परायणः । पितॄणां हि भवेदेतत्साक्षादिव हुतं हविः २७
ब्राह्मणानां सहस्रेभ्यो योगी चाग्रासने यदि । यजमानं च भोक्तॄंश्च नौरिवाम्भसि तारयेत् ॥
असतां प्रग्रहो यत्र सतां चैव विमानना । दण्डो देवकृतस्तत्र सद्यः पतति दारुणः ॥ २९
हित्वाऽऽगमं सधर्माणं बालिशं यत्र भोजयेत् । आदिकर्म समुत्सृज्य दाता तत्र विनश्यति॥३०
पिण्डमग्नौ सदा दद्याद्भोगार्थी तु प्रयत्नतः । प्रजार्थी योषिते दद्यान्मध्यमं तत्र पूर्वकम् ॥ ३१
उत्तमां द्युतिमन्विच्छन्गोषु नित्यं प्रयच्छति । प्रज्ञां पूजां यशः कीर्तिं गोषु नित्यं प्रयच्छति ॥
प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति । सौकुमार्यमथान्विच्छन्कुक्कुटेभ्यः प्रयच्छति ॥ ३३
एवमेतत्समुद्दिष्टं पिण्डनिर्वपणात्फलम् । आकाशं गमयेद्वाऽपि स्थितोऽप्सु दक्षिणामुखः ॥
पितॄणां स्थानमाकाशं दक्षिणा चैव दिग्भवेत् ॥ ३४
एके विप्राः पुनः प्राहुः पिण्डोद्धरणमग्रतः । अनुज्ञाते तु तैर्विप्रैर्वानर्धुद्वि(द्धि)यतामिति(?) ३५
पुष्पाणां च फलानां च भक्ष्याणामन्नतस्तथा । अग्रमुद्धृत्य सर्वेषा जुहुयाज्जातवेदसि ॥ ३६
भक्ष्यमन्नं तथा पेयमनुत्तमफलानि च । हुत्वा चाग्नौ ततः पिण्डान्निर्वपेद्दक्षिणामुखः ॥ ३७
(*वैवस्वताय सोमाय हुत्वा पिण्डं निवेद्य सः । उदकानयनं कृत्वा पश्चाद्विप्रांश्च भोजयेत् ॥
आनुपूर्व्यात्तथा विप्रान्भक्ष्यैरन्नैश्च शक्तितः ) ॥ ३८

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके न स्ति ।

१ ख. सत्कर्मे । २ ख. ग. °ह । पूजानु° । ३ ख. ग. घ. °पि च क° । ४ ख. ग. घ. ङ. बालं । ५ क. ग. °णा सर्वमे° । ६ ख. घ. °नता । द° । ७ क. पतये । ग. घ. ङ. पत्नये । ८ क. स्थितो सुद° । ९ ख. ङ. एके । १० ख. °ण्डोद्धार° । ११ ख. ग. घ. ङ. °यमुत्तमानि फ° । १२ ङ. तोषयेत् । १३ ङ. °रन्नैः स्वश°।

(श्राद्धकल्पः)

स्निग्धैर्भक्ष्यैः सुगन्धैश्च तर्पयेत रसैस्तथा। एकाग्रः पर्युपासीत प्रयतः प्राञ्जलिःस्थितः॥
तत्परः श्रद्दधानश्च कामानाप्नोति मानवः॥ ३९
अक्षुद्रत्वं कृतज्ञत्वं दाक्षिण्यं सत्कृतं च यत्। ततो यज्ञं च दानं च प्रयच्छन्ति पितामहाः॥४०
अतः परं विधिं सौम्यं भुक्तवत्सु द्विजातिषु। आनुपूर्व्येण विहितं तन्मे निगदतः शृणु॥ ४१
प्रोक्ष्य भूमिमथोद्धृत्य पूर्वं पितृपरायणः। ततोऽत्र विकिरं कुर्याद्विधिदृष्टेन कर्मणा॥ ४२
स्वधां वाचय ततो विप्रा विधिवद्भूरिदक्षिणान्। अन्नशेषमनुज्ञाप्य सत्कृत्य द्विजसत्तमान्॥
प्राञ्जलिः प्रयतश्चैव अनुगम्य विसर्जयेत्॥ ४३

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम षट्सप्ततितमोऽध्यायः॥ ७६॥

आदितः श्लोकानां समष्ट्यङ्काः—६९९१

---

अथ सप्तसप्ततितमोऽध्यायः।

---

श्राद्धकल्पः।

बृहस्पतिरुवाच—

सकृदभ्यर्चिताः प्रीता भवन्ति पितरोऽव्ययाः। योगात्मानो महात्मानो विपाप्मानो महौजसः॥
प्रेत्य च स्वर्गलाभाय कामैश्वर्यं सुविस्तरम्। येषां चाप्यनुगृह्णन्ति मोक्षप्राप्तिक्रमेण तु॥ २
तानि वक्ष्याम्यहं सौम्याः सरांसि सरितस्तथा। तीर्थानि चैव पुण्यानि देशाञ्शैलांस्तथाऽऽश्रमान्॥
पुण्यो यस्त्रिषु लोकेष्वमरकण्टकपर्वतः। पर्वतप्रवरः पुण्यः सिद्धचारणसेवितः॥ ४
यत्र वर्षसहस्राणि प्रयुतान्यर्बुदानि च। तपः सुदुश्चरं तेपे भगवानङ्गिराः पुरा॥ ५
यत्र मृत्योर्गतिर्नास्ति तथैवासुररक्षसाम्। न भयं चैव वाऽलक्ष्मीर्योवङ्गमिर्धरिष्यति॥ ६
तेजसा यशसा चैव भ्राजते स नगोत्तमः। शृङ्गमाल्यवतो नित्यं वह्निः संवर्तको यथा॥ ७
मृदवश्च सुगन्धाश्च हेमाभाः प्रियदर्शनाः। शान्ताः कुशा इति ख्याताः पिबन्दक्षिणनर्मदाम्॥
दृष्टवान्स्वर्गसोपानं भगवानङ्गिराः पुरा। अग्निहोत्रे महातेजाः प्रस्तरार्थंकुशोत्तमान्॥ ९
तेषु दर्भेषु पिण्डान्योऽमरकण्टकपर्वते। दद्यात्सकृदपि प्राज्ञस्तस्य वक्ष्यामि यत्फलम्॥ १०
तद्भवत्यक्षयं श्राद्धं पितॄणां प्रीतिवर्धनम्। अन्तर्धानं च गच्छन्ति क्षेत्रमासाद्य नरस्तदा॥ ११
तत्र ज्वालेश्वरः पुण्यो दृश्यतेऽद्यापि सर्वशः। सशल्यानां च सत्त्वानां विशल्यकरणी नदी॥
प्राग्दक्षिणा तु सावर्ता वापी सा पर्वतोत्तमे। कलिङ्गदेशपार्श्वार्धे पितॄणां प्रीतिवर्धनम्॥ १३
सिद्धक्षेत्रमृषिश्रेष्ठा यदुक्तं परमं भुवि। संमतो देवदैत्यानां श्लोकमप्युशना जगौ॥ १४
धन्यास्ते पुरुषा लोके ये प्राप्यामरकण्टकम्। पितॄन्संतर्पयिष्यन्ति श्राद्धे पितृपरायणाः॥ १५
अल्पेन तपसा सिद्धिं गमिष्यन्ति न संशयः। सकृदेवार्चितास्तत्र स्वर्गमपरकण्टके॥ १६
महेन्द्रपर्वते रम्ये पुण्यं शक्रनिषेवितम्। तत्राऽऽरुह्य भवेत्प्रीतिः श्राद्धं चैव महत्फलम्॥ १७
विल्वाधः शिखरे युक्ता दिव्यं चक्षुः प्रवर्तते। अदृश्यं चैव भूतानां देववच्चरते महीम्॥ १८

---

१ क. विधिना त.। २ ख. °तोऽत्रवि°। ३ ख. ग. घ. ङ. विकरं। ४ ख. ग. °रार्थे कु°। घ. °रर्थ कु°। ५ ख. °लाश्वरः पु°।

सप्तगोदावरे चैव गोकर्णे च तपोवने । अश्वमेधफलं तत्र स्नात्वा च लभते नरः ॥ १९
धूतपापस्थलं माप्य पूतः स्नात्वा भवेन्नरः । रुद्रस्तत्र तपस्तेपे देवदेवो महेश्वरः ॥ २०
गोकर्णे वर्णितं विप्रैर्नास्तिकानां निदर्शनम् । अब्राह्मणस्य सावित्री पठतः संप्रणश्यति ॥ २१
देवर्षिभवने शृङ्गे सिद्धचारणसेविते । आरुह्य तं तु नियमात्ततो यान्ति त्रिविष्टपम् ॥ २२
दिव्यैश्चन्दनवृक्षैश्च पादपैरुपशोभितम् । आपश्चन्दनसंपृक्ता वहन्ति सततं यतः ॥ २३
नदी प्रवर्तते ताभ्यस्ताम्रपर्णीति नामतः । योषेव समदा खेदा दक्षिणं याति सागरम् ॥ २४
नद्यास्तस्यास्तु या आपो मूर्छमाना महोदधौ । शङ्खा भवन्ति मुक्ताश्च जायन्ते शङ्ख[3]मुक्तिकाः ॥२५
उदकानयनं कृत्वा शङ्खमौक्तिकसंयुतम् । आधिभिर्व्याधिभिश्चैव मुक्ता यान्त्यमरावतीम् ॥ २६
चन्दनेभ्यः प्रयुक्तानां शङ्खानां मौक्तिकस्य च । पापकर्तॄनपि पितॄंस्तारयन्ति यथाश्रुति ॥ २७
*चन्द्रतीर्थे वरे पुण्ये पुण्यकाङ्क्षिनिषेविते । चन्द्रतीर्थे कुमार्यां तु कावेर्यां प्रभवेऽक्षये ॥
श्रीपर्वतस्य तीर्थेषु वैकृते च तथा गिरौ ॥ २८
एकस्था यत्र दृश्यन्ते वृक्षा ह्यौशिरपर्वते । पालाशाः खादिरा विल्वा प्लक्षाश्वत्थविकङ्कताः ॥
एतद्धि मण्डलं सिद्धं यज्ञियं द्विजसत्तमाः । अस्मिन्मुक्त्वा जनोऽङ्गानि क्षिप्रं यात्यमरावतीम् ॥
कर्माणि स्वप्रयुक्तानि सिध्यन्ति प्रभवात्यये । दुष्प्रसक्तानि पितृषु प्रयुक्तानि भवन्त्युत ॥ ३१
पितॄणां दुहिता पुण्या नर्मदा सरितां वरा । तत्र श्राद्धानि दत्तानि अक्षयाणि भवन्त्युत ॥ ३२
माठरस्य वने पुण्ये सिद्धचारणसेविते । अन्तर्धानं न गच्छन्ति सक्तास्तस्मिन्महागिरौ ॥ ३३
विन्ध्ये चैव गिरौ पुण्ये धर्माधर्मनिदर्शनम् । पापधारां न पश्यन्ति धारां पश्यन्ति साधवः ॥३४
तस्यां तु दृश्यते पापं केषांचित्पापकर्मणाम् । स्पष्टा भवति सा धारा प्रायशः शुभकर्मणाम् ॥ ३५
कोशलायां मतङ्गस्य वापी पापनिषूदनी । स्नातास्तस्यां[12] दिवं यान्ति कामचारविहंगमाः ॥ ३६
कुमारि[11]कोशलातीर्थे पर्वते पालपञ्जरे । पाण्डुकूले समुद्रान्ते पण्डारकवने तथा ॥ ३७
विमले च विपापे च सत्कृत्य प्रभवेऽभ[13]यम् । श्रीवृक्षे गृध्रकूटे च जम्बूमार्गे च नित्यशः ॥ ३८
असितस्य गुरोः पुण्ये योगाचार्यस्य धीमतः । तत्रापि श्राद्धमानन्त्यमसितायां च नित्यशः ॥
पुष्करेष्वक्षयं श्राद्धं तपश्चैव महाफलम् । महोदधौ प्रभासे च तस्मादेवं विनिर्दिशेत् ॥ ४०
देविकायां वृषो नाम कूपः सिद्धनिषेवितः । समुत्पतन्ति तस्याऽऽपो गवां शब्देन नित्यशः ॥
योगेश्वरैः सदा जुष्टः[15] सर्वपापबहिष्कृतैः[16] । दद्याच्छ्राद्धं तु यस्तस्मिंस्तस्य वक्ष्यामि यत्फलम् ॥
अक्षयं सर्वकामीयं श्राद्धं प्रीणाति वै पितॄन् । जातवेदः शिला तत्र साक्षादग्नेः सनातनी ॥ ४३
यस्त्वग्निं प्रविशेत्तत्र नाकपृष्ठे स मोदते । अग्निः शान्तः पुनर्जातस्तस्मिन्दत्तं तदक्षयम् ॥ ४४
दशाश्वमेधिके तीर्थे तीर्थे पञ्चाश्वमेधिके । यथोद्दिष्टं फलं तेषां क्रतूनां नात्र संशयः ॥ ४५
ख्यातं हयशिरो नाम तीर्थं सद्यो वरप्रदम् । श्राद्धं तत्र तदाऽक्षय्यं दत्त्वा स्वर्गे च मोदते ॥४६

---

* इदमर्धं नास्ति क. ग. घ. ङ. पुस्तकेषु ।

---

१ क आपः स्वादनस । २ क. °महाखे° । ३ ख. घ. ङ. खशुक्ति° । ४ ख. ग. घ. °क्षयम् । श्री° ५ ख. ग. ङ. पलाशाः । ६ ख. ग. ङ. सिद्धाय° । ७ ख. ग. घ. ङ. °षु सुप्रयुक्ता भ° । ८ ख. ग. घ. ङ. पुण्याधर्माधर्मनिदर्शनीम् । धारा पापा न । ९ ख. °षः । तेषा न दृ° । १० क. न । ११ ग. °रक्शिला° । १२ ख. °न्ते विन्दा° । १३ क. °भये श्री । १४ ग. ङ. °स्य गिरौ पु° । १५ ग. घ. ङ. जुष्ट स° । १६ ग. घ. ङ. °ष्कृतम् । द° ।

श्राद्धं कुम्भे विमुञ्चन्ति ज्ञेयं पापनिषूदनम् । श्राद्धं तत्राक्षयं प्रोक्तं जप्यहोमतपांसि च ॥ ४७
अजतुङ्गे शुभे तीर्थे तर्पयेत्सततं पितॄन् । दृश्यते पर्वसु च्छाया यत्र नित्यं दिवौकसाम् ॥
पृथिव्यामक्षयं दत्तं नीरुजा यत्र पाण्डवाः ॥ ४८
योगेश्वरैः सदा जुष्टं सर्वपापबहिष्कृतैः । दद्याच्छ्राद्धं तु यस्तस्मिंस्तस्य वक्ष्यामि यत्फलम्॥ ४९
अर्चितास्तेन वै साक्षाद्भवन्ति पितरः सदा । अस्मिल्लोँके वशी यः स्यात्प्रेत्य स्वर्गे स मोदते ॥
मायशः प्रवरः पुण्यः शिवो नाम ह्रदस्तथा । तत्र व्याससरः पुण्यं दिव्यं ब्रह्मसरस्तथा ॥ ५१
उज्जन्तः पर्वतः पुण्यो यस्मिन्योगेश्वरालयः । तत्रैव चाऽऽश्रमः पुण्यो वसिष्ठस्य महात्मनः॥५२
ऋग्यजुःसामशिरसः कापोतः पुण्यसाह्वयः । आख्यातः पञ्चमो वेदो सृष्टा ह्येतेषु ब्रह्मणा ॥५३
गत्वैतान्मुच्यते पापाद्द्विजो वह्निः सनातनः । श्राद्धं चाऽऽनन्त्यमेतेषु जप्यहोमतपांसि च ॥ ५४
पुण्डरीके महातीर्थे पुण्डरीकसमं फलम् । ब्रह्मतीर्थे महातीर्थे अश्वमेधफलं लभेत् ॥ ५५
सिन्धुसागरसंभेदे तथा पञ्चनदेऽक्षयम् । कीरकात्पा ततः पुण्यो मण्डवायां च पर्वते ॥ ५६
देयं सप्तरदे श्राद्धं मानसे च विशेषतः । महाकूटे च वन्दे च गिरौ त्रिककुदे तथा ॥ ५७
संध्यायां च महाविद्यां दृश्यते महदद्भुतम् । अश्रद्दधानान्नाभ्येति साऽभ्येति च धृतव्रतान् ॥५८
जातवेदःशिला तत्र साक्षादग्नेः सनातनी । श्राद्धानि चाग्निकार्यं च तत्र कुर्यात्सदाऽक्षयम् ॥
संश्रयित्वैकमेकेन सायाह्नं प्रति नित्यशः । *तस्मिन्देयं सदा श्राद्धं पितॄणामक्षयार्थिना ॥ ६०
कृतात्मा वाऽकृतात्मा वा यत्र विज्ञायते नरः । स्वर्ग्यमार्गप्रदं नाम तीर्थं सद्योवरप्रदम् ॥
वैराण्युत्सृज्य तस्मिंस्तु दिवं सप्तर्षयो गताः ॥ ६१
अद्यापि तानि दृश्यन्ते वैराण्येव गतानि तु । स्नात्वा स्वर्गमवाप्नोति तस्मिंस्तीर्थोत्तमे नरः ॥
रूपातमायतनं तत्र नन्दिसिद्धनिषेवितम् । नैन्दीश्वरस्य या मूर्तिर्दुराचारैर्न दृश्यते ॥ ६३
दृश्यन्ते काञ्चना यूपाः संचिष्ये(दृष्टे) भास्करोदये । कृत्वा प्रदक्षिणं तांस्तु गच्छन्त्यन्तर्हिता दिवम्
सर्वतश्च कुरुक्षेत्रं सुतीर्थं च विशेषतः । पुण्यं सनत्कुमारस्य योगेशस्य महात्मनः ॥
कीर्त्यते च तिलान्दत्त्वा पितॄणां वै सदाऽक्षयम् ॥ ६४
ओजसे चाक्षयं श्राद्धं धर्मराजनिवेशने । श्राद्धं दत्तममावस्यां विधिना च यथाक्रमम् ॥ ६५
पुनः संनिहितानां वै कुरुक्षेत्रे विशेषतः । अर्चयेद्वा पितॄंस्तत्र सत्पुत्रस्त्वनृणो भवेत् ॥ ६६
विनशने सरस्वत्यां प्लक्षप्रस्रवणे तथा । व्यासतीर्थे सरस्वत्यां त्रिप्लुक्षे च विशेषतः ॥ ६७
देयमोङ्कारपवने श्राद्धमक्षयमिच्छता । सर्वतश्चैव गङ्गायां मैनाके च नगोत्तमे ॥ ६८
यमुनाप्रभवे चैव सर्वपापैः प्रमुच्यते । अत्युष्णाश्चातिशीताश्च आपस्तत्र निदर्शनम् ॥ ६९
यमस्य भगिनी पुण्या मार्तण्डदुहिता तथा । तत्राक्षयं तदा श्राद्धं पितृभिः पूर्वकीर्तितम् ॥ ७०
ब्रह्मतुङ्गह्रदे स्नात्वा सद्यो भवति ब्राह्मणः । तस्मिन्हि श्राद्धमानन्त्यं जपहोमतपांसि च ॥ ७१

* एतदर्धस्थानेऽयं पाठः ख. पुस्तके–' तस्मिन्देशे तथा श्राद्धं पितॄणामक्षयार्थिनाम् ' इति ।

१ ङ. ज पद्यो । २ ख. घ. ङ. °गः कपो° । ३ ग. घ. ङ. °स्यानपञ्चमावेदाः सृष्टा ह्ये° । ४ ङ. °कुभे ग° । ५ ग. ङ. °द्धनयां । ६ ख. ग. घ. ङ. °दाग्निः सनातनः । श्रा° । ७ ख. °याह्ने प्र° । ८ ख. घ. ङ. स्वर्गमा° । ९ ख. घ. ङ. नन्देश्व° । १० ग. ङ. संचिष्मे । ११ क. °णं ते तु ग° । १२ ख ग. ङ. °क्षयान् । ओ° । १३ घ. °निषेवणे । श्रा° । १४ ख. घ. ङ. °मावास्यां । १५ ख. ग. घ. ङ. °क्षेत्रं वि° । १६ क. °त्या प्रकाशेन त्रि° । १७ क. ख. प्रह्मा तु° ।

स्थाणुभूतश्चरंस्तत्र वसिष्ठो वै महातपाः । अद्यापि यत्र दृश्यन्ते पादपा मणिचर्चिताः ॥ ७२
तुला तु दृश्यते यत्र धर्माधर्मप्रदर्शिनी । यया वै तुलितं विप्रैस्तीर्थानां फलमुत्तमम् ॥ ७३
पितॄणां दुहिता योगा गन्धकालीति विश्रुता । चतुर्थो ब्रह्मणश्चांशः पराशरकुलोद्वहः ॥ ७४
व्यस्य त्वेकं चतुर्धा तु वेदं धीमान्महामुनिः । महायोगं महात्मानं यो व्यासं जनयिष्यति॥ ७५
अच्छोदकं नाम सरो यत्राच्छोदा समुच्छ्रिता । मत्स्ययोनौ पुनर्जाता नियोगाद्वारणेन तु ॥ ७६
तस्या यत्राऽऽश्रमः पुण्यः पुण्यकृद्भिर्निषेवितः । सकृद्दत्तं तु वै श्राद्धमक्षयं समुदाहृतम् ॥
तस्यां योगसमाधाने दत्तं युगपदुद्भवेत् ॥ ७७
कुबेरतुङ्गे व्यामोघे व्यासतीर्थे तथैव च । पुण्यः स ब्राह्मणो दद्याच्छ्राद्धमानन्त्यमक्षयम् ॥ ७८
सिद्धैस्तु सेविता नित्यं दृश्यते नाकृतात्मभिः । अनिवर्तनं तु नन्दायां वेद्यां प्रागुत्तरे(?)दिशि ॥
सिद्धक्षेत्रं तु वै जुष्टं यत्प्राप्य न निवर्तते । महालये पदं न्यस्तं महादेवेन धीमता ॥ ८०
देव्यालये तपस्तप्त्वा एकपादेन ईश्वरः । नीहारश्च युगं दिव्यमुमातुङ्गे स्थितं जलम् ॥ ८१
उमातुङ्गे भृगोस्तुङ्गे ब्रह्मतुङ्गे महालये । कौद्रवत्यां च शाण्डिल्यां गुहायां वामनस्य च ॥ ८२
गत्वा चैतानि पूतः स्याच्छ्राद्धमक्षयमेव च । जपो होमस्तथा ध्यानं यत्किंचित्सुकृतं भवेत् ८३
ब्रह्मचर्यं यजन्ते वै गुरुभक्ताः शतं समाः । एवमादीनि सद्यस्तां स्नात्वा प्राप्नोति सत्फलम् ॥
कुमारधारा तत्रैव दृष्टा पापप्रणाशनी । यानासनं च तत्रैव सद्यः स्यात्प्रदृश्यते ॥ ८५
शैलकीर्तिपुराभ्यासे कामानाप्नोति पुष्कलान् । अदृश्यः सर्वभूतानां देववच्चरते महीम् ॥ ८६
कौश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् । तत्र श्राद्धानि देयानि नित्यमक्षयमिच्छता ॥ ८७
अक्षयं तु भवेच्छ्राद्धं शालग्रामसमन्ततः । दृष्ट्वा न दृश्यते तत्र प्रत्यक्षमकृतात्मनाम् ॥ ८८
प्रत्यादेशो ह्यशिष्टानां शिष्टानां च निवेशनम् । तत्र चैव ह्रदे पुण्ये दिव्यो वै नागराधतः ॥८९
पिण्डं गृह्णाति हि सतां न गृह्णात्यसतां हि सः । अतिमद्यैर्भुजगैर्भोक्तुमन्नं न शक्यते(?) ॥ ९०
प्रत्यक्षं दृश्यते धर्मस्तीर्थयोरनयोर्द्वयोः । देवदारुवने चापि चारयेस्तं निदर्शनम् ॥ ९१
विधूतानि तु पापानि दृश्यन्ते सुकृतात्मनाम् । भागीरथ्यां प्रयागे च नित्यमक्षयमुच्यते ॥ ९२
कालञ्जरे दशार्णायां नैमिषे कुब्जाङ्गले । वाराणस्यां नगर्यां तु देयं श्राद्धं तु यत्नतः ॥ ९३
तस्यां योगेश्वरो नित्यं तत्तस्यां दत्तमक्षयम् । दत्त्वा चैतेषु पूतः स्याच्छ्राद्धमानन्त्यमेव च ॥ ९४
जपो होमस्तथा ध्यानं यत्किंचित्सुकृतं भवेत् । लौहित्ये वैतरण्यां वै स्वर्णवेद्यां तथैव च ॥ ९५
सकृदेव समुद्रान्ते दृश्यते पुण्यकर्मभिः । गङ्गायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥ ९६
गयायां गृध्रकूटे च श्राद्धं दत्तं महाफलम् । हिमं च *पतते तत्र समन्तात्पञ्चयोजनम् ॥ ९७
भरतस्याऽऽश्रमे पुण्येऽरण्यं पुण्यतमं स्मृतम् । मतङ्गस्य पदं तत्र दृश्यते मांसचक्षुषा ॥ ९८

* अत्राऽऽत्मनेपदमार्षम् ।

१ ख. ग. घ. गाद्गन्ध° । २ ख घ. लोद्भवः । °व्य° । ३ ख. ग घ. ङ. °मोघे व्या° । ४ ग. घ. ङ. °ननीश्व° ।
५ ग. घ. कारद्वत्यां शां° । ङ. कारद्रुवत्यां शां° । ६ ख घ. ङ. °त्रि यत्फल° । ७ ख. दृष्ट्वा । ८ ग. शैलः श्री° ।
९ घ. °कीर्तिः पु° । १० ख. °दृश्यं स° । ११ घ. कश्यपस्य । १२ ग. ङ. °ग्रामे सं° । १३ ग. घ. ङ. °पि धार° ।
१४ घ. ङ °त्यं तस्यां दत्तमयाक्ष° । १५ ख. घ. ङ. °त्वा चैतानि पू° । १६ क. च । तत्रै° । १७ क. ग. ङ. गयायां ।
१८ ख. घ. ङ. °ण्ये रम्यं पु° ।

रुयापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनम्। एवं पञ्चवनं पुण्यं पुण्यकृद्भिर्निषेवितम्॥
यस्मिन्पाण्डुविशालेति तीर्थं सद्यो निदर्शनम्॥ ९९
तुलामानैस्तथा चापैः शास्त्रैश्च विविधैस्तथा। उन्मज्जन्ति तथा लग्ने ये वै पापकृतो जनाः॥
तृतीयायां तथा पादे निःस्वरे पावमण्डले(?)। महाह्रदे वै कौशिक्यां दत्तं श्राद्धं महाफलम्॥
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता। बहून्देवयुगांस्तप्त्वा तपस्तीव्रं सुदुश्चरम्॥ १०२
अल्पेनाप्यत्र कालेन नरो धर्मपरायणः। पाप्मानमुत्सृजत्याशु जीर्णत्वचमिवोरगः॥ १०३
सिद्धानां प्रीतिजननैः पापानां च भयंकरैः। लेलिहानैर्महाभोगै रक्षितं तु दिवानिशम्॥ १०४
नाम्ना कनकनन्दीति तीर्थं त्रैलोक्यविश्रुतम्। उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितम्॥
तत्र स्नात्वा दिवं यान्ति कामचारा विहंगमाः॥ १०५
दत्तं चापि तथा श्राद्धमक्षयं समुदाहृतम्। ऋणैस्त्रिभिस्तदा स्नात्वा निष्क्रिणोति नरोत्तमः॥
तीरे तु सरसस्तत्र देवस्याऽऽयतनं महत्। आरुह्य तज्जपंस्तत्र सिद्धो याति दिवं ततः॥ १०७
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम्। तत्र गत्वा सुरश्रेष्ठं दृश्यते महदद्भुतम्॥ १०८
तस्मिन्निर्वर्तयेच्छ्राद्धं यथाशक्ति यथाबलम्। कामान्स लभते दिव्यान्मोक्षोपायं च नित्यशः॥
मानसे सरसि श्रेष्ठे दृश्यते महदद्भुतम्। दिवश्च्युता महाभागा ह्यन्तरिक्षे विराजते॥ ११०
गङ्गा त्रिपथगा देवी सोमपादाच्च्युता भुवि। आकाशे दृश्यते तत्र तोरणं सूर्यसंनिभम्॥ १११
जाम्बूनदमयं दिव्यं स्वर्गद्वारमिवाऽऽयतम्। यतः प्रवर्तते भूयः पूर्वसागरमन्तिमम्॥ ११२
पावनी सर्वभूतानां धर्मज्ञानां विशेषतः। चन्द्रभागा च सिन्धुश्च उभे मानससंनिभे॥
सागरं पश्चिमं याति दिव्यसिन्धुर्नदीवरः॥ ११३
पर्वतो हिमवान्नाम नानाधातुविभूषितः। योजनानां सहस्राणि आयतोऽशीतिरुच्यते॥ ११४
सिद्धचारणसंकीर्णः सिद्धचारणसेवितः। तत्र पुष्करिणी रम्या सुषुम्ना नाम विश्रुता॥ ११५
दश वर्षसहस्राणि तत्र जातस्तु जीवति। श्राद्धं भवति चाऽऽनन्त्यं तस्यां दत्तं महोदयम्॥
तारयेच्च पदा श्राद्धे दशपूर्वान्दशापरान्॥ ११६
सर्वं पुण्यं हिमवतो गङ्गा पुण्या च सर्वतः। समुद्रगाः समुद्राश्च सर्वे पुण्याः समन्ततः॥ ११७
एवमादिषु सर्वेषु श्राद्धं निर्वर्तयेद्बुधः। पूतो भवति स्नात्वा तु दत्त्वा दत्त्वा तथैव च॥ ११८
शैलमानुषु तुङ्गेषु कन्दरेषु गुहासु च। उपह्वरनितम्बेषु तथा प्रस्रवणेषु च॥ ११९
पुलिनेष्वापगानां च तथैव प्रभवे युगे। महोदधौ गवां गोष्ठे संगमेषु वनेषु च॥ १२०
असंसृष्टोपलिप्तासु हृद्यासु सुरभीषु च। गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च॥ १२१
कुर्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि। प्रदक्षिणं दिशं गत्वा सर्वकामचिकीर्षिकः॥ १२२
एवमेतेषु सर्वेषु श्राद्धं कुर्यादतन्द्रितः। एवमेव तु मेधावी ब्राह्मीं सिद्धिमवाप्नुयात्॥ १२३
त्रैवर्ण्ये विहिते स्थाने धर्मवर्णाश्रमे तथा। कोपस्थानस्य संत्यागात्प्राप्यते पितृपूजनम्॥ १२४

१ ग. ङ. °मू°। यचम्पकव°। घ. °म्। यत्पावकत्र°। २ ■ °गैस्तैरस्यं सदि°। ३ ख घ. °त्वा निः क्रीणाति। ४ ग. निक्रीणाति। ५ क. °त्वा पुर°। ६ ख. ग. ङ. °न्तिमान्। पा°। ७ क. उभौ मा°। ८ क. °निभौ। सा°। ९ ख. ग. घ दिव्यो सिं°। १० ख. घ. ङ. °तस्यां। ११ ख ग. घ. ङ. श्राद्धे। १२ ख. °त्वा दानं त°। १३ ख. ग. घ. °मेतत्तु मे°। १४ घ. °वर्ण्यविहिताः श्राद्धे धर्मा व°। १५ ख ग. घ. ङ. °स्थानाच्च स°।

तीर्थान्यनुसरन्धीरः श्रद्दधानो जितेन्द्रियः । कृतपापश्च शुध्येत किं पुनः शुभकर्मकृत् ॥　१२६
तिर्यग्योनिं न गच्छेच्च कुदेशे न च जायते । स्वर्गी भवति वै विप्रो मोक्षोपायं च विन्दति ॥
अश्रद्दधानाः पाप्मानो नास्तिकाः स्थितसंशयाः । हेतुद्रष्टा च पञ्चैते न तीर्थफलमश्नुते ॥　१२७
गुरुतीर्थे परा सिद्धिस्तीर्थानां परमं पदम् । ध्यानं तीर्थपरं तस्माद्ब्रह्मतीर्थं सनातनम् ॥　१२८
उपवासात्परं ध्यानमिन्द्रियाणां निवर्तनम् । उपवासनिवृद्धा हि प्राणैरिह पुनः पुनः ॥　१२९
प्राणापानौ समौ कृत्वा विषयाणीन्द्रियाणि च । बुद्धिं मनसि संयम्य सर्वेषां तु निवर्तनम् ॥
प्रत्याहारं पुनर्विद्धि मोक्षोपायमसंशयम् । इन्द्रियाणां मनो घोरं बुद्ध्यादीनां प्रवर्तनम् ॥　१३१
अनाहारात्क्षयं याति विद्यादनशनं तपः । निग्रहाद्वृद्धिमनसो रम्या बुद्धिस्तु जायते ॥　१३२
क्षीणेषु सर्वपापेषु क्षीणेष्वेवेन्द्रियेषु च । परिनिर्वाति शुद्धात्मा यथा वह्निर्निरिन्धनः ॥　१३३
कारणेभ्यो गुणेभ्योऽथ व्यक्ताव्यक्तस्य कृत्स्नशः । वियोजयति क्षेत्रज्ञं तेभ्यो योगेन योगवित् ॥
तस्य नास्ति गतिस्थानं व्यक्ताव्यक्तं न संशयः । *नासन्न सदसच्चैव नैव किंचित्स्थितेरिति ॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तीर्थयात्रा नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०८६

---

अथाष्टसप्ततितमोऽध्यायः ।

---

श्राद्धकल्पः ।

बृहस्पतिरुवाच—

अतः परं प्रवक्ष्यामि दानानि च फलानि च । श्राद्धकर्मणि मेध्यानि वर्जनीयानि यानि च ॥　१
हिमप्रपतने कुर्यादाहरेद्वा हिमं ततः । अग्निहोत्रमतः पुण्यं परमं हि ततः स्मृतम् ॥　२
नक्तं तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात् । सर्वस्वेनापि कर्तव्यं क्षिप्रं वै राहुदर्शने ॥　३
उपरागे न कुर्याद्य पङ्के गौरिव सीदति । कुर्वाणस्तूद्धरेत्पापैर्मज्जनैरिव सागरे ॥　४
विश्वदेवं च सौम्यं च बहुमांसपरं हविः । विषाणं वर्जयेत्खाड्गमसूयानाशनाय वै ॥　५
त्वष्टा वै वार्धमानस्तु देवेशेन महात्मना । पिबञ्छचीपतेः सोमं पृथिव्यामपतत्पुरा ॥　६
श्यामाकास्तु तथोत्पन्नाः पित्रर्थमपि पूजिताः । विप्रुषस्तस्य नासाभ्यामसक्ताभ्यां तथेक्षवः ॥७
श्लेष्माणः शीतला हृद्या मधुराश्च तथेक्षवः । श्यामाकैरिक्षुभिश्चैव पितॄणां सार्वकामिकम् ॥
कुर्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥　८
श्यामाका हस्तिनामा च पटोलं बृहतीफलम् । अगस्त्यस्य शिखा तीव्रा कषायाः सर्व एव च ॥
एवमादीनि चान्यानि स्वादूनि मधुराणि च । नागरं चात्र वै देयं दीर्घमूलकमेव च ॥　१०

---

* एतदर्धस्थाने 'आसन्नः सदसन्नैव नैव किंचित्स्थितः' इति क. पुस्तके ।

---

१ ग. घ. ङ. धीरः । २ ख. घ. काः छिन्नस° । ३ ख. घ ङ. °प्रमानानि° । ४ ख. ग. घ. ङ. विधियानीन्द्रि° । ५ ख. ग. घ. ङ.° ना निव° । ६ ख. घ. ङ. नसा र° । ७ ख. °प्रतपने । ८ ख. तपः । ९ घ. °णस्तु हरेत्पापं म° । १० ख. ग. ङ. पाप म° । ११ क. ममामौरि° । १२ ख. ग. घ. ङ. °भागेन दे° । १३ क. तथैव च । से° । १४ ग. ङ. श्लेष्मग. शी° ।

वंशीकरीराः सुरसाः सर्जकं भूस्तृणानि च । वर्जनीयानि वक्ष्यामि श्राद्धकर्मणि नित्यशः ॥११
[ *लशुनं गृञ्जनं चैव पलाण्डुः पिण्डमूलकम् । करम्भाद्यानि चान्यानि हीनानि रसगन्धतः ॥
श्राद्धकर्मणि वर्ज्यानि कारणं चात्र वक्ष्यते । पुरा दे(दै)वासुरे युद्धे निर्जितस्य बलेः सुरैः॥१३
व्रणेभ्यो विस्फुरन्तो वै पतिता रक्तबिन्दवः । तत एतानि वर्ज्यानि श्राद्धकर्मणि नित्यशः]॥१४
अथ वेदोक्तनिर्यासाहुँवणान्यूषणानि च । श्राद्धकर्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः ॥ १५
दुर्गन्धं फेनिलं चैव तथा वै पल्वलोदकम् । न लभेयत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ॥ १६
आविकं मार्गमौष्ट्रं च सर्वमेकशफं च यत् । माहिषं चामरं चैव पयो वर्ज्यं विजानता ॥ १७
अतः परं प्रवक्ष्यामि वर्ज्यान्देशान्प्रयत्नतः । न द्रष्टव्यं च यैः श्राद्धं शौचाशौचं च कृत्स्नशः॥१८
वन्यमूलफलाहारैः श्राद्धं कुर्यात्तु श्रद्धया । राँष्ट्रमिष्टमवाप्नोति स्वर्गं मोक्षं यशस्करम् ॥ १९
अनिष्टशब्दसंकीर्णं जन्तुव्याप्तमथापि वा । पूतिगन्धां तथा भूमिं श्राद्धकर्मणि वर्जयेत् ॥ २०
नद्यः सागरपर्यन्ता द्वारं दक्षिणपूर्वतः । त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् ॥ २१
उत्तरेण महानद्या दक्षिणेन चैं कैकटात् । देशस्त्रैशङ्कवो नाम वर्जितः श्राद्धकर्मणि ॥ २२
कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च । प्रनष्टाश्रमधर्माश्च वर्ज्या देशाः प्रयत्नतः ॥ २३
नग्नादयो न पश्येयुः श्राद्धमेवं व्यवस्थितम् । गच्छन्ति तैस्तैर्दृष्टानि न पितॄन्न पितामहान् ॥ २४
शंयुरुवाच—
नग्नादीन्भगवन्सम्यङ्मयाद्य परिपृच्छतः । कथय द्विजमुख्याद्य विस्तरेण यथातथम् ॥ २५
एवमुक्तो महातेजा बृहस्पतिरुवाच तम् । सर्वेषामेव भूतानां त्रयी संवरणं स्मृतम् ॥ २६
परित्यजति यो मोहात्ते वै नग्नादयो जनाः । प्रलीयते नरो यस्मान्निरालम्बश्च यो द्विपः ॥ २७
द्विपं यश्च परित्यज्य मोक्षमन्यत्र मार्गति । वृथा वेदाश्रमास्तस्मिन्यो वै सम्यङ्न पश्यति ॥ २८
ब्राह्मणाः क्षत्रिया वैश्या वृषलाश्चैव सर्वशः । पुरा दे(दै)वासुरे युद्धे निर्जितैरसुरैस्तदा ॥ २९
पाषण्डवैकृतास्तात नैषा सृष्टिः स्वयंभुवेः । + यद्विश्राद्धकानिर्ग्रन्थाः शक्त्या जीवन्ति कर्पटाः॥
ये धर्मं नानुवर्तन्ते ते वै नग्नादयो जनाः । वृथाजटी वृथामुण्डी वृथानग्नश्च यो द्विजः ॥ ३१
वृथाव्रती वृथाजापी ते वै नग्नादयो जनाः । कुलंधमा निकाशाश्च तथा पुष्टिकलंशकाः ॥ ३२
कृतकर्माक्षितास्त्वेते कुपथाः परिकीर्तिताः । एभिर्निर्वृत्तं वा श्राद्धं वृथा गच्छति मानवान् ॥
ब्रह्मघ्नश्च कृतघ्नश्च नास्तिका गुरुतल्पगाः । दस्यवश्च नृशंसाश्च दर्शनेनैव वर्जिताः ॥ ३४

---

* धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति । + एतदर्धस्थानेऽयं पाठः—' द्विश्राद्धकश्च निर्ग्रन्थाः शाक्या पुष्टिकलशकाः ' इति क. पुस्तके ।

---

१ ख. ग. घ. ङ. 'साः मज्जकं । २ घ. °गन्धि च । था' । ३ ख ग. घ. °णि चान्यानि' । ४ क. 'षणा° । ५ ग. घ. ङ. यत्रैव । ६ ख ग. ङ. राज्यनिष्टाम' । ७ ख. ग. ङ. च वैकटः । दे° । ८ क. 'रष्कराः । ९ घ. 'नि पितॄ-श्चापि पिता' । १० क विस्तारे' । ख. ग. ङ. विस्तारय यथा° । ११ क 'मा द्विजोत्तमः । प्र' । १२ क. 'रो यः स्यान्नि° । १३ क. यतो वेदमनस्त° । १४ घ. 'षभाश्च न स° । १५ ख. ङ. 'टाश्च न स' । १६ ख. 'ण्डा वैकृताः स्याता नै' । १७ क. °कृतस्याने नै° । घ. 'कृतस्तात नै' । १८ क. 'भुवा । द्वि' । १९ ग. वः । विद्धि श्रा° । २० क. 'मुद्री । वृ' । २१ क. निषादाश्च तथा पुष्टिविनाश° । २२ क. ख. ग. घ. °सं दृष्टं वा श्राद्धं गच्छन्ति मा' । २३ क. 'नरा. । ब्र' ।

(श्राद्धकल्पः)

उक्तं श्राद्धं मया पूर्वं विधिश्च श्राद्धकर्मणि । परिशिष्टं प्रवक्ष्यामि ब्राह्मणानां यथाक्रमम् ॥ ४
न मीमांस्याः सदा विप्राः (*पवित्रं ह्येतदुत्तमम् । दैवे पित्र्ये च सततं श्रूयते वै परीक्षणम् ॥ ५
यस्मिन्दोषाः प्रपश्येरन्सद्भिर्वा वर्जितस्तु यः । जानीयाद्वाऽपि संवासाद्वर्जयेत्तं प्रयत्नतः ॥ ६
अविज्ञातं द्विजं श्राद्धे परीक्षेत सदा बुधः । सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम् ॥ ७
तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः) । पूजयेच्चापि पाद्येन पादाभ्यञ्जनभोजनैः ॥ ८
उर्वीं सागरपर्यन्तां देवा योगेश्वरास्तथा । नानारूपैश्चरन्त्येते प्रजा धर्मेण पालयन् ॥ ९
अर्चयित्वा ततो दद्याद्विप्रायातिथये नरः । व्यञ्जनानि च भक्ष्याणि फलं तेषां तथैव च ॥ १०
आग्निष्टोमं तु पयसा प्राप्नुयाद्वै तथा श्रुतम् । सर्पिषा तु शुभं चक्षुः षोडशाहफलं लभेत् ॥
मधुना त्वतिरात्रस्य फलं च समवाप्नुयात् ॥ ११

तस्माद्भुयाच्छ्रद्दधानो नरो वै सर्वैः कामैर्भोजयेद्यस्तु विप्रान् ।
सर्वार्थदः सर्वविप्रातिथेयः फलं भुङ्क्ते सर्वमेधस्य नित्यम् ॥ १२

यस्तु श्राद्धेऽतिथिं प्राप्य दैवे वाऽप्यवमन्यते । तं वै देवा निरस्यंति होता यद्वत्परां वसुम्(?) ॥
देवाश्च पितरश्चैव वह्निश्चैव हि तान्द्विजान् । आविश्य भुञ्जते तद्वै लोकानुग्रहकारणात् ॥ १४
अपूजिता दहन्त्येते दद्युः कामांश्च पूजिताः । सर्वस्वेनापि तस्माद्वै पूजयेदतिथीन्सदा ॥ १५
वानप्रस्थो गृहस्थश्चै गृहमभ्यागतोऽथवा । वालाः खिन्ना यतिश्चैवं जानीयादतिथीन्सदा ॥ १६
अभ्यागतो याचकः स्यादतिथिः स्यादयाचकः । अतिथेरतिथिः श्रेष्ठः सोऽतिथिर्योग उच्यते ॥
न घोरो नापि संकीर्णो नाविद्यो न विशेषवित् । न च संतानसमृद्धो न सेवी नाचरोऽतिथिः ॥
पिपासिताय श्रान्ताय भ्रान्तायातिवुभुक्षते । तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥ १९
आरुह्य भृगुतुङ्गे तु गत्वा पुण्यां सरस्वतीम् । आपगां तु नदीं पुण्यां गङ्गां देवीं महानदीम् ॥२०
हिमवत्प्रभवा नद्यो याश्चान्या ऋषिपूजिताः । +सरस्तीर्थाभिसंवेद्या नदी नववहास्तथा ॥ २१
गत्वैतान्मुच्यते पापैः स्वर्गे नित्यं महीयते । दशरात्रमशौचं तु प्रोक्तं वै मृतसूतके ॥ २२
ब्राह्मणस्य विशेषेण क्षत्रिये द्वादशं स्मृतम् । अर्धमासं तु वैश्यस्य मासाच्छूद्रस्तु शुध्यति ॥२३
उदक्या सर्ववर्णानां त्रिरात्रेण तु शुध्यति । उदक्यां सूतिकां चैव श्वानमन्त्यावसायिनम् ॥ २४
नग्नादीन्मृतहारांश्च स्पृष्ट्वाऽशौचं विधीयते । स्नात्वा सचैलो मृद्भिस्तु द्वादशभिस्तु शुध्यति ॥
एतदेव भवेच्छौचं मैथुने वमने तथा । मृदा प्रक्षाल्य हस्तौ तु कुर्याच्छौचविधिं नरः ॥ २५
प्रक्षाल्य चाद्भिर्हस्तौ च स्नात्वा चैव मृदा पुनः । मृदं गुह्ये ततो द्विस्तु पुनरेव मृदं बुधः ॥ २८
एवं शौचविधिर्दृष्टः सर्ववर्णेषु नित्यदा । परिदद्यान्मृदस्तिस्रो हस्तपादावसेचनम् ॥ २९
आरण्यं शौचमेतत्तु ग्राम्यं वक्ष्याम्यतः परम् । मृदस्तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ॥
मृदः पञ्चदशामेध्ये हस्तादीनां विभागशः । अनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वाद्भिरेव तु ॥ ३१
कण्ठं शिरो वा प्रावृत्य रथ्यापादगतस्तु वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

* भनुश्चिह्नान्तर्गतग्रन्थः ख पुस्तके नास्ति । + नास्तीदमर्धं घ. पुस्तके ।

१ ख. भवेत् । २ ख. ग. घ. ङ. तं । ३ क तिथौ यः । ४ ख. ग. घ. ङ. प्रांतं ५ ख. ग. ङ. °थ सताम° । ६ ङ. वालखिल्याय° । ७ ख. घ. ङ. °व विज्ञेया अति° । ८ ग. घ. ङ. °वो नावि° । ९ क. सन्तो न° । १० ख. घ ङ. °द गुह्य ततोऽद्भिस्तु । ११ ग. घ. ङ. °दशो मे° ।

प्रक्षाल्य पात्रं निक्षिप्य आचम्याभ्युक्षणं पुनः । द्रव्यस्यान्यस्य तु तथा कुर्यादभ्युक्षणं पुनः ॥
पुष्पादीनां तृणानां च प्रोक्षणं हविषां तथा[1] । परा[2]हृतानां द्रव्याणां निधाया[3]भ्युक्षणं तथा ॥ ३४
नाप्रोक्षितं हरेत्किंचिच्छ्राद्धे दैवे तथा पुनः । उत्तरेणाऽऽहरेद्वेद्यां दक्षिणेन निसर्जयेत् ॥ ३५
* विच्छिन्नं स्याद्विपर्यासे दैवे पित्र्ये तथैव च । दक्षिणेन तु हस्तेन दक्षिणां [4]वेदिमालिखेत् ॥
कराभ्यामेव देवानां पितॄणां विकरं(?) शुभम् । क्षुभितस्वप्नयोश्चैव तथा मूत्रपुरीषयोः ॥ ३७
निष्ठीविते तथा व्यक्ते भुक्त्वा विपरिधाय च । उच्छिष्टस्य च संस्पर्शे तथा पादावसेचने ॥ ३८
उत्सृष्टस्य सुसंभाषे ह्यशुचे(?) प्रयतस्य च । संदेहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ॥ ३९
विना यज्ञोपवीतेन मोहात्तु येऽप्युपस्पृशेत् । ओष्ठस्य दन्तसंस्पर्शे दर्शने चान्त्यवासिनाम् ॥ ४०
जिह्वया चैव संस्पृश्य दन्तासक्तं तथैव च । सशब्दमङ्गुलीभिश्च प्रणतश्चावलोकयन् ॥ ४१
यश्चाधर्मे स्थितो मोहादाचान्तोऽप्यशुचिर्भवेत् । उपविश्य शुचौ देशे प्रणतः प्रागुदङ्मुखः ॥ ४२
पादौ प्रक्षाल्य हस्तौ तु अन्तर्जानुरुपस्पृशेत् । प्रसन्नास्त्रिः पिबेच्चापः प्रयतः सुसमाहितः ॥ ४३
द्विरेव मार्जनं कुर्यात्सकृदभ्युक्षणं ततः । खानि मूर्धानमात्मानं हस्तौ पादौ तथैव च ॥ ४४
अभ्युक्षणं तथा तस्य यद्यमीमांसितं भवेत् । एवमाचमनं तस्य वेदा यज्ञास्तपांसि च ॥ ४५
दानानि ब्रह्मचर्यं च भवन्ति सफलास्तथा । क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ॥
भवन्ति च वृथा तस्य क्रिया ह्येता न संशयः । वाग्भावशुद्धनिर्णिक्तमदुष्टं वाऽप्यनिन्दितम् ॥
मेध्यान्येतानि ज्ञेयानि दुष्टमेभ्यो विपर्ययः । न वक्तव्यः सदा विप्रः क्षुधितो नास्ति किंचन ॥
तस्मै सत्कृत्य यो दद्याद्यूपो यज्ञ उच्यते । अँप्लुष्टान्नं शृतान्नं तु कृशवृत्तिमयाचकम् ॥ ४९
एकान्तशीलं ह्रीमन्तं सदा श्राद्धेषु भोजयेत् । यो ददात्यन्तिमेभ्यश्च स ब्रह्मघ्नो दुरात्मवान् ॥
अपि जातिशतं गत्वा न स मुच्येत किल्बिषात् । विषमं भोजयेद्विप्रानेकपङ्क्त्यां च यो नरः॥
नियुक्तो वाऽनियुक्तो वा पङ्क्त्या हरति दुष्कृतम् । पापेन गृह्यते क्षिप्रमिष्टापूर्तं च नश्यति ॥
यतिस्तु सर्वविप्राणां सर्वेषामग्र उत्तमे । इतिहासपञ्चमान्वेदान्यः पठेत्तु द्विजोत्तमः ॥ ५३
*अनन्तरं यथायोग्यं नियोक्तव्यो विजानता । त्रिवेदोऽनन्तरस्तस्य द्विवेदस्तदनन्तरः ॥* ५४
एकवेदस्तथा पश्चाध्यायाध्यायी ततः परम् । पावनां ये च पङ्क्त्या वै तान्प्रवक्ष्ये निबोधत ॥
य एते पूर्वनिर्दिष्टाः सर्वे ते ह्यनुपूर्वशः । षडङ्गी विनयी योगी स[12]र्वतन्त्रस्तथैव च ॥ ५६
यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः । अष्टाद[13]शानां विद्यानामेकः स्यात्पारगोऽपि यः॥ ५७
यथावद्वर्तमानश्च सर्वे ते पङ्क्तिपावनाः । त्रिणाचिकेतस्त्रैविद्यो यश्च धर्मान्पठेद्द्विजः ॥ ५८
बार्हस्पत्ये तथा शास्त्रे पारं यश्च द्विजो गतः । सर्वे ते पावना विप्राः पङ्क्तीनां समुदाहृताः ॥
आमन्त्रितस्तु यः श्राद्धे योषितं सेवते द्विजः । पितरस्तस्य तं मासं तस्य रेतसि शेरते ॥ ६०
श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं यो निषेवते । पितरस्तस्य तं मासं रेतःस्था नात्र संशयः ॥

* इदमर्धं नास्ति ख. ग पुस्तकयोः ।

१ क. °प्रा । प्रोक्षितं तु ह° । २ घ. °रेण ह° । ३ घ. °विसर्ज° । ४ क. वेदमा° । ५ घ. ङ. य उप° । ६ ग. घ. °शुद्धिनि° । ७ ख. ग. घ. ङ. अक्लिष्टान्नं घृणीकामं कृ° । ८ ग. घ. °त् । मा ददात्पातिते चैवम-ग्रयोगे तु° । घ. °त् । माददात्पातिते चैवमत्रण्यो तु° । ९ ख. घ. ङ. °योगं नि° । १० क. °नायैव प° । ११ ग. घ. ङ. °ह्वविनयो योगी । १२ क °मेकस्मिन्पार° । १३ क. केताख्ये° ।

( श्राद्धकल्पः ) .

उक्तं श्राद्धं मया पूर्वं विधिश्च श्राद्धकर्मणि । परिशिष्टं प्रवक्ष्यामि ब्राह्मणानां यथाक्रमम् ॥ ४
न मीमांस्याः सदा विप्राः (*पवित्रं ह्येतदुत्तमम् । दैवे पित्र्ये च सततं श्रूयते वै परीक्षणम् ॥ ५
यस्मिन्दोषाः प्रपश्येरन्सद्भिर्वा वर्जितस्तु यः । जानीयाद्वाऽपि संवासाद्वर्जयेत्तं प्रयत्नतः ॥ ६
अविज्ञातं द्विजं श्राद्धे परीक्षेत सदा बुधः । सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम् ॥ ७
तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः) । पूजयेच्चापि पाद्येन पादाभ्यञ्जनभोजनैः ॥ ८
उर्वीं सागरपर्यन्तां देवा योगेश्वरास्तथा । नानारूपैश्चरन्त्येते प्रजा धर्मेण पालयन् ॥ ९
अर्चयित्वा ततो दद्याद्विप्रायातिथये नरः । व्यञ्जनानि च भक्ष्याणि फलं तेषां तथैव च ॥ १०
आग्निष्टोमं तु पयसा प्राप्नुयाद्वै तथा श्रुतम् । सर्पिषा तु शुभं चक्षुः षोडशाहफलं लभेत् ॥
मधुना त्वतिरात्रस्य फलं च समवाप्नुयात् ॥ ११

तेनाप्नुयाच्छ्रद्दधानो नरो वै सर्वैः कामैर्भोजयेद्यस्तु विप्रान् ।
सर्वार्थदः सर्वविप्रातिथेयः फलं भुङ्क्ते सर्वमेधस्य नित्यम् ॥ १२

यस्तु श्राद्धेऽतिथिं प्राप्य दैवे वाऽप्यवमन्यते । तं वै देवा निरस्यंति होता यद्वत्परां वसुम्(?) ॥
देवाश्च पितरश्चैव वह्निश्चैव हि तान्द्विजान् । आविश्य भुञ्जते तद्वै लोकानुग्रहकारणात् ॥ १४
अपूजिता दहन्त्येते दद्युः कामांश्च पूजिताः । सर्वस्वेनापि तस्माद्वै पूजयेदतिथीन्सदा ॥ १५
वानप्रस्थो गृहस्थश्च गृहमभ्यागतोऽथवा । बालाः खिन्ना यतिश्चैवं जानीयादतिथीन्सदा ॥ १६
अभ्यागतो याचकः स्यादतिथिः स्यादयाचकः । अतिथेरतिथिः श्रेष्ठः सोऽतिथिर्योग उच्यते ॥
न घोरो नापि संकीर्णो नाविद्यो न विशेषवित् । न च संतानसमृद्धो न सेवी नाचरोऽतिथिः ॥
पिपासिताय श्रान्ताय भ्रान्तायातिबुभुक्षते । तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥ १९
आरुह्य भृगुतुङ्गे तु गत्वा पुण्यां सरस्वतीम् । आपगां तु नदीं पुण्यां गङ्गां देवीं महानदीम् ॥ २०
हिमवत्प्रभवा नद्यो याश्चान्या ऋषिपूजिताः । +सरस्तीर्थाभिसंवेद्या नदी नववहास्तथा ॥ २१
गत्वैतान्मुच्यते पापैः स्वर्गे नित्यं महीयते । दशरात्रमशौचं तु प्रोक्तं वै मृतसूतके ॥ २२
ब्राह्मणस्य विशेषेण क्षत्रिये द्वादशं स्मृतम् । अर्धमासं तु वैश्यस्य मासाच्छूद्रस्तु शुध्यति ॥ २३
उदक्या सर्ववर्णानां त्रिरात्रेण तु शुध्यति । उदक्यां सूतिकां चैव श्वानमन्त्यावसायिनम् ॥ २४
नग्नादीन्मृतहारांश्च स्पृष्ट्वाऽशौचं विधीयते । स्नात्वा सचैलो मृद्भिस्तु द्वादशभिस्तु शुध्यति ॥
एतदेव भवेच्छौचं मैथुने वमने तथा । मृदा प्रक्षाल्य हस्तौ तु कुर्याच्छौचविधिं नरः ॥ २५
प्रक्षाल्य चाद्भिर्हस्तौ च स्नात्वा चैव मृदा पुनः । मृदं गुह्ये ततो द्विस्तु पुनरेव मृदं बुधः ॥ २८
एवं शौचविधिर्दृष्टः सर्ववर्णेषु नित्यदा । परिदद्यान्मृदस्तिस्रो हस्तपादावसेचनम् ॥ २९
आरण्यं शौचमेतत्तु ग्राम्यं वक्ष्याम्यतः परम् । मृदस्तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ॥
मृदः पञ्चदशाविध्ये हस्तादीनां विभागशः । अनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वद्भिरेव तु ॥ ३१
कण्ठं शिरो वा प्रावृत्य रथ्यापादगतस्तु वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

* धनुश्चिह्नान्तर्गतग्रन्थः ख पुस्तके नास्ति । + नास्तीदमर्धं घ. पुस्तके ।

ख ग. घ. ङ. तं । ३ क तिथी य. । ४ ख. ग. घ. ङ. प्राश ५ ख. ग. ङ. °थ सताम° । ६ ङ. पाद् ... घ. ङ. °व विज्ञेया अति° । ८ ग. घ. ङ. °यो नावि° । ९ क. सन्तो न° । १० ख. घ ङ. °दशो मे° । ङ. °द गु°

(श्राद्धकल्पः)

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा । मृन्मयैर्भाजनैर्वाऽपि तिरोधाय वसुंधराम् ॥ ६०
उद्धृतोदकमादाय मृत्तिकां चैव वाग्यतः । दिवा उदङ्मुखः कुर्याद्रात्रौ वै दक्षिणामुखः ॥ ६१
दक्षिणेन च हस्तेन गृह्णीयाद्वै कमण्डलुम् । शौचं चै वामहस्तेन गुदे तिस्रस्तु मृत्तिकाः ॥ ६२
दश चापि पुनर्दद्याद्वामहस्तक्रमेण तु । द्वाभ्यां वाऽपि पुनर्दद्याद्धस्तानां पञ्च मृत्तिकाः ॥ ६३
मृदा प्रक्षाल्य पादौ च आचम्य च यथाविधि । आपस्त्याज्यास्त्रयश्चैव सूर्याग्निपवनाम्भसाम् ॥
कुर्यात्संनिहितं नित्यं प्राङ्मुखस्तीर्थे कमण्डलुम् । असत्कार्यं कार्यमेतैर्यावत्पादधावनम् ॥ ६५
आचमनं द्वितीयेन देवकार्यं ततः परम् । उपवासस्त्रिरात्रं तु दुष्टहस्ते ह्युदाहृतः ॥ ६६
विप्रकृष्टेन कृच्छ्रेण प्रायश्चित्तमुदाहृतम् । स्पृष्ट्वा श्वानं श्वपाकं वा तप्तकृच्छ्रं समाचरेत् ॥ ६७
मानुषास्थीनि संस्पृश्य उपोष्यं शुद्धिकारणम् । त्रिरात्रमुक्तं सस्नेहमेकरात्रमतोऽन्यथा ॥ ६८
कारस्कराः पुलिन्दाश्च तथाऽऽन्ध्रशबरादयः । पीत्वा चापो भूतिलये गत्वा चैव युगंधराम् ६९
सिन्धोरुत्तरपर्यन्तं तथा द्विव्यन्तरे शतम् । पापदेशाश्च ये केचित्पापैरध्युषिता जनैः ॥ ७०
शिष्टैश्च वर्जिता ये च ब्राह्मणैर्वेदपारगैः । गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ॥ ७१
मनोव्यक्तिरथाग्निश्च काले चैवोपलेपनम् । विख्यापनं च शौचानां नित्यमज्ञानमेव च ॥ ७२
अतोऽन्यथा तु यः कुर्यान्मोहाच्छौचस्य संकरम् । पिशाचान्यातुधानांश्च फलं गच्छत्यसंशयम्
शौचमश्रद्दधानस्य म्लेच्छजातिषु जायते । अपक्षाश्चैव पापो वा तिर्यग्योनिगतोऽपि वा ॥ ७४
शौचेन मोक्षं कुर्वाणः स्वर्गवासी भवेन्नरः । शुचिकामा हि देवा वै देवैरेतदुदाहृतम् ॥ ७५
बीभत्समशुचिं चैव वर्जयन्ति सुराः सदा । त्रीणि शौचानि कुर्वन्ति न्यायतः शुभकर्मणः ॥ ७६
ब्रह्मण्यायाऽऽतिथेयाय शौचयुक्ताय धीमते । पितृभक्ताय दान्ताय सानुक्रोशाय च द्विजाः ॥ ७७
दत्तैः प्रीताः प्रयच्छन्ति पितरो योगवर्धनाः । मनसा काङ्क्षितान्कामांस्त्रैलोक्यप्रभवानिति ॥ ७८

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७१६४

---

अथ नवसप्ततितमोऽध्यायः ।

---

श्राद्धकल्पः ।

ऋषय ऊचुः—
अहो वीर्यं त्वया सूत श्राद्धकल्पस्तु कीर्तितः । श्रुतो नः श्राद्धकल्पो वै ऋषिभिः परिकीर्तितः ॥
अतीव विस्तरो यस्य विशेषेण प्रकीर्तितः । यद् शेषं महाभाग प्रोच्यमानं यथागमम् ॥ २
सूत उवाच—
कीर्तयिष्यामि ते विप्राः प्रोच्यमानं मतं तु यत् । श्राद्धे यानि महाभागास्तन्मे शृणुत विस्त

---

[illegible]

( श्राद्धकल्पः )

ये चान्ये पापकर्माणः सर्वांस्तान्परिवर्जयेत् । देवदेवर्षिनिंदायां रताश्चैव विशेषतः ॥ ३५
असुरान्यातुधानांश्च दृष्टमेभिर्व्रजन्त्युत । ब्राह्मं कृतयुगं प्रोक्तं त्रेता तु क्षत्रियं स्मृतम् ॥
वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतम् ॥ ३६

पितर ऊचुः—

वेदाः कृतयुगे पूज्यास्त्रेतायां तु सुरास्तथा । युद्धानि द्वापरे नित्यं पाषण्डाश्च कलौ युगे ॥ ३७
अपमानापवित्रश्च कुक्कुटो ग्रामसूकरः । श्वा चैव दर्शनादेव हन्ति श्राद्धं न संशयः ॥ ३८
शावसूतकसंस्पृष्टो दीर्घरोगिभिरेव च । मलिनैः पतितैश्चैव न द्रष्टव्यं कथं चन ॥ ३९
अन्नं पश्येयुरेते वै नैतत्स्याद्धव्यकव्ययोः । तत्संस्पृष्टं प्रधानार्थं संस्कारेश्चापदो भवेत् ॥ ४०
हविषां संहतानां तु पूर्वमेव विवर्जनम् । मृत्संयुक्ताभिरद्भिश्च प्रोक्षणं च विधीयते ॥ ४१
सिद्धार्थकैः कृष्णतिलैः कार्यं वाऽप्यवकीरणम् । गुरुसूर्याग्निवस्तूनां दर्शनं वाऽपि यत्नतः ॥४२
आसनारूढमन्नेषु पादोपहतमेव च । अमेध्यैर्जङ्गमैर्दृष्टं शुष्कं पर्युषितं च यत् ॥ ४३
अंशितं परिदुष्टं च तथैवाग्रावलेहितम् । शर्कराकेशपाषाणैः कीटैर्यच्चाप्युपद्रुतम् ॥ ४४
पिण्याकमथितं चैव तथा तिलयवादिषु । सिद्धोक्षताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ॥ ४५
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि । सन्ति वेदविरोधेन केचिद्विज्ञानमानिनः ॥ ४६
अयज्ञपतयो नाम ते श्राद्धस्य यथा रजः । दधि शौक्तं तथाऽभक्ष्याः शुक्तं चौषं विवर्जितम् ॥४७
वार्ताकं वर्जयेद्द्यात्सर्वानभिषवानपि । सैन्धवं लवणं यच्च तथा मानससंभवम् ॥ ४८
पवित्रं परमं ह्येतत्प्रत्यक्षमपि वर्तते । अग्नौ निक्षिप्य गृह्णीयाद्धस्तौ प्रक्षिप्य यत्नतः ॥ ४९
गमयेन्मस्तकं चैव ब्रह्मतीर्थं हि तत्स्मृतम् । द्रव्याणां प्रोक्षणं कार्यं तथैवाऽऽवपनं पुनः ॥ ५०
निधाय चाद्भिः सिञ्चेत तथैवाप्सु निवेशनम् । अरिष्टतुमुले विल्वं तिवङ्गुदष्वदनान्यपि ॥ ५१
विदलानां च सर्वेषां चर्मवच्छौचमिष्यते । तथा दन्तास्थिदारूणां शृङ्गाणां चावलेखनम् ॥ ५२
सर्वेषां मृन्मयानां तु पुनर्दाह उदाहृतः । मणिवज्रप्रवालानां मुक्ताशङ्खमणेस्तथा ॥ ५३
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः । स्याच्छौचं सर्ववालानामाविकानां च सर्वशः ॥५४
आविकानां च सर्वेषां मृद्भिरद्भिर्विधीयते । आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं पुनः ॥५५
[illegible] च भस्मना समुदाहृतम् । फलपुष्पशलाकानां प्लावनं चाद्भिरिष्यते ॥ ५६
प्रोक्षणं च भूमेश्चैवोपलेपनम् । निष्क्रम्य बाह्यतो ग्रामाद्वायुपूता वसुंधरा ॥ ५७
[illegible] चैव मृद्भिः शौचं विधीयते । एवमेष समुद्दिष्टः शौचानां विधिरुत्तमः ॥
परं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ५८

मातर्गृहात्पश्चिमदक्षिणेन इषुक्षेपं चाक्षमात्रं पदं च ।
कुर्यात्पुरीषं च शिरोऽवगुण्ठ्य न च स्पृशेत्तत्र शिरः करेण ॥ ५९

१ क. घ °मद्रूक° । २ ध °संस्पृष्टो ३ ख. नष्टद्रव्यै. कं° । ४ ख. ग ड. °संसृ° । ५ ग. घ. रस्तव° । ६ क ड. वर्जितम् । मृ° । ७ ख. ड. °र्यच्चाप्युपद्रुतं° । घ. °र्यं चाप्युपर्गी° । ८ ड. °माजाज्य पा° । ९ ख ग घ. ड. अश्विन परिदुग्ध च । १० ख ग. °पदवात् । पि° । ११ घ. सिद्ध.° । १२ ख. ग. ड. °द्राहृता° । १३ क अजज्ञ° । ड. अजज्ञयत° । १४ घ. °यज्ञायत° । १५ ख. घ ड. शास्य । १६ क शुक्र । १७ क. °क्र चैर विच् । १८ क. नार्तांक । १९ क. °व्यवज्ञीया° । २० ख घ ड. °रिष्टे तु तुल विल्वे तिङ्गुदश्चन्दना° । २१ ख.ग. घ ड [illegible] । २२ क. °दा धर्मं° । २३ ख ग घ ड °मुध्यत्त° ।

मुण्डाञ्जटिलकाषायाञ्श्राद्धकालेऽपि वर्जयेत् । शिखिभ्यो वा त्रिदण्डिभ्यः श्राद्धं यत्नात्प्रदापयेत्
ये तु व्रते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा । देवभक्ता महात्मानः पुनीयुर्दर्शनादपि ॥९१
सर्वं योगेश्वरैर्व्याप्तं त्रैलोक्यं वै निरन्तरम् । तस्मात्पश्यन्ति ते सर्वं यत्किंचिज्जगतीगतम् ॥ ९२
व्यक्ताव्यक्तं वशीकृत्य सर्वस्यापि च यत्परम् । सदसच्चेति यैर्दृष्टं सदसच्च महात्मनाम् ॥ ९३
सर्वज्ञानानि दृष्टानि मोक्षादीनि महात्मनाम् । तस्मात्तेषु सदा सक्तः प्राप्नोत्यनुपमं शुभम् ॥९४

ऋचो हि यो वेद स वेद वेदान्यजूंषि यो वेद स वेद यज्ञम् ।
*सामानि यो वेद स वेद ब्रह्म यो मानसं वेद स वेद सर्वम् ॥* ९५

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे ब्राह्मणपरीक्षणं नाम नवसप्ततितमोऽध्यायः ॥ ७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७२९९

---

अथाशीतितमोऽध्यायः ।

---

श्राद्धकल्पे दानफलम् ।

बृहस्पतिरुवाच—

*अतः परं प्रवक्ष्यामि दानानि च फलानि च । तारणं सर्वभूतानां स्वर्गमार्गं सुखावहम् ॥* १
लोके श्रेष्ठतमं स्वर्ग्यमात्मनश्चापि यत्प्रियम् । सर्वं पितृणां दातव्यं तेषामेवाक्षयार्थिना ॥ २
जाम्बूनदमयं दिव्यं विमानं सूर्यसंनिभम् । दिव्याप्सरोभिः संकीर्णमन्नदो लभते फलम् ॥ ३
आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि । आयुः प्रकाममैश्वर्यं रूपं च लभते सुतम् ॥ ४
उपवीतं तु यो दद्याच्छ्राद्धकालेषु धर्मवित् । पानं च सर्वविप्राणां ब्रह्मदानस्य यत्फलम् ॥ ५
कृत्नं विप्रेषु यो दद्याच्छ्राद्धकाले कमण्डलुम् । मधुक्षीरस्रवा धेनुर्दातारमुपतिष्ठति ॥ ६
चक्राविद्धं तु यो दद्याच्छ्राद्धकाले कमण्डलुम् । धेनुं स लभते दिव्यां पयोदां कामदोहिनीम् ॥
पूर्णशय्यां तु यो दद्यात्पुष्पमाल्यविभूषिताम् । प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥
भवनं रत्नसंपूर्णं सशय्यासनभोजनम् । श्राद्धे दत्त्वा यतिभ्यस्तु नाकपृष्ठे स मोदते ॥ ९
मुक्तावैदूर्यवासांसि रत्नानि विविधानि च । वाहनानि च दिव्यानि अयुतान्यर्बुदानि च ॥
सुमहज्ज्वलनवर्णं रत्नकामसमन्वितम् । सूर्यचन्द्रप्रभं दिव्यं विमानं लभतेऽक्षयम् ॥ ११
*अप्सरोभिः परिवृतं कामगं तु मनोजवम् । वसते स विमानाग्र्ये स्तूयमानः समन्ततः ॥* १२
*दिव्यैर्गन्धैः प्रसिञ्चन्ति पुष्पवृष्टिभिरेव च । गन्धर्वाप्सरसस्तत्र गायन्ते वादयन्ति च ॥ १३
कन्या युवतयो मुख्याः सहिताश्चाप्सरोगणैः । सुस्वरैस्ते विबुध्यन्ते सततं हि मनोरथैः ॥ १४
अश्वदानसहस्रेण रथदानशतेन च । दन्तिनां च सहस्रेण योगिन्या वसते नरः ॥ १५
दद्यात्पितृभ्यो योगिभ्यो यस्तु ज्वलनसप्रभामि । अथ निष्कसहस्राणां फलं प्राप्नोति मानवः ॥

---

* एतदर्थस्थाने इदमर्धं 'दिव्यैः पुष्पैः प्रसिञ्चन्ति पुष्पवृष्टिभिरेव च' इति ख. ग. घ. ङ. पुस्तकेषु ।

---

११ घ यतेन दा° । २ क. °मुत्तम । ३ ख ग. ङ. °विमान् । जा° । ४ ग. घ °प्रकामं° । ५ ग. ङ. °सुतम् । घ. फलम् । ६ ख. °म् । सुवर्णं तु । ग.ङ. °म् । सुवर्णं तु । ग. °म् । पूर्णवर्णं तु । ७ ख. ग. घ. ङ. °नि ग्रयु° । ८ ग घ ङ. °वाणिज्याना ग° । ९ क. °रेरे । वि° । ग. °हेवैरिन्दु° । १० ख. ग. घ. ङ. °मिहायन्ते करः ।

दधि गव्यमसंसृष्टं भक्ष्यान्नानाविधांस्तथा। तदन्नं शोचति श्राद्धे वर्षासु च मघासु च ॥ ४४
घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत्। गयायां हस्तिनश्चैव दत्त्वा श्राद्धे न शोचति ॥ ४५
ओदनं पायसं सर्पिर्मधुमूलफलानि च। भक्ष्यांश्च विविधान्दत्त्वा प्रेत्य चेह च मोदते ॥ ४६
शर्कराक्षीरसंयुक्तं पृथुकं नित्यमक्षयम्। स्युश्च संवत्सरं प्रीताः कृशरैर्मधुरेण च ॥ ४७
सक्तुलाजास्तथा पूपाः कुल्माषव्यञ्जनैस्तथा। सर्पिःस्निग्धानि हृद्यानि दध्ना सक्तूंस्तु भोजयेत्॥
श्राद्धेष्वेतानि यो दद्यात्पद्मानि लभते निधिम् ॥ ४८
नवसस्यानि यो दद्याच्छ्राद्धे सत्कृत्य यत्नतः। सर्वभोगानवाप्नोति पूज्यते च दिवं गतः ॥ ४९
भक्ष्यभोज्यानि चोष्याणि पेयलेह्यवराणि च। सर्वश्रेष्ठानि यो दद्यात्सर्वश्रेष्ठो भवेन्नरः ॥ ५०
वैश्वदेवं च सौम्यं च खाड्गमांसं परं हविः। विषाणं वर्जयेत्खाड्गं असूयां नाशयामहे ॥ ५१
भोजनेऽप्यासनं दद्यादतिथिभ्यः कृताञ्जलिः। सर्वयज्ञक्रियाणां स फलं प्राप्नोत्यनुत्तमम् ॥५२
क्षिप्रमत्युष्णमक्लिष्टं दद्याद्यावद् बुभुक्षते। व्यञ्जनं च तथा स्निग्धं भक्त्या सत्कृत्य यत्नतः ॥५३
तरुणादित्यसंकाशं विमानं हंसवाहनम्। अन्नदो लभते तिस्रः कन्याकोटीस्तथैव च ॥ ५४
अन्नदानात्परं दानं विद्यते नेह किंचन। अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥ ५५
जीवदानात्परं दानं न किंचिदिह विद्यते। अन्नैर्जीवति त्रैलोक्यमन्नस्यैव हि तत्फलम् ॥ ५६
अन्ने लोकाः प्रतिष्ठन्ति लोकदानस्य तत्फलम्। अन्नं प्रजापतिः साक्षात्तेन सर्वमिदं ततम्॥
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥ ५७
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा। क्षिप्रं प्राप्नोति तत्सर्वं पितृभक्तो हि मानवः ॥
प्रतिश्रयं सदा दद्यादतिथिभ्यः कृताञ्जलिः। देवास्ते समतीक्षन्ते दिव्यातिथ्यैः सहस्रशः ॥५९
सर्वाण्येतानि यो दद्यात्पृथिव्यामेकराड्भवेत्। त्रिभिर्द्वाभ्यामथैकेन दानेन तु सुखी भवेत् ॥६०
दानानि परमो धर्मः सद्भिः सत्कृत्य पूजितः। त्रैलोक्यस्याऽऽधिपत्यं हि दानादेव व्यवस्थितम्
राजा तु लभते राज्यमधनश्चोत्तमं धनम्। क्षीणायुर्लभते चाऽऽयुः पितृभक्तः सदा नरः ॥
यान्कामान्मनसाऽर्थेत तांस्तस्य पितरो ददुः ॥ ६२

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे दानफलं नामाशीतितमोऽध्यायः ॥ ८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३२१

---

अथैकाशीतितमोऽध्यायः।

---

श्राद्धकल्पे तिथिविशेषे श्राद्धफलम्।

बृहस्पतिरुवाच—
अत ऊर्ध्वं प्रवक्ष्यामि श्राद्धकर्माणि पूजितम्। काम्यनैमित्तिकाजस्रं श्राद्धकर्माणि नित्यशः ॥ १

---

१ क. क्ष्या नानाविधास्त°। २ ख. ग. घ. ङ. छायाश। ३ क. °म्। यच्च संवत्सरं प्रीता कृ°। ४ ख. घ. ङ. स.हृत्य भो°। ५ ग. घ. ङ च सहृत°। ६ ख. ग. घ. ङ. दत्त्वा अति°। ७ क. घ. कल्यको°। ८ ख. घ. ङ. अमात्यैश्च°। ९ ख. घ. ङ. °फले हि दानादेव भुवं स्थितः। रा°। १० ख. घ. ङ. क्षा यावेत्तांस्त°। ११ क. °रो विदुः।

पुत्रदा धनमूलाः स्युरष्टकास्तिस्र एव च । पूर्वपक्षो वरिष्ठो हि पूर्वा चित्री उदाहृता ॥ २
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदैविकी । आद्या पूपैः सदा कार्या मांसैरन्या भवेत्सदा ॥
( *शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः । अन्वष्टका पितॄणां वै नित्यमेव विधीयते ॥ ४
यद्यन्या च चतुर्थी स्यात्तां च कुर्याद्विशेषतः । तासु श्राद्धं बुधः कुर्यात्सर्वस्वेनापि नित्यशः ॥
परत्रेह च सर्वेषु नित्यमेव सुखी भवेत् । पूजकानां सदोत्कर्षो नास्तिकानामधोगतिः ॥ ६
पितरः पर्वकालेषु तिथिकालेषु देवताः । सर्वे पुरुषमायान्ति निपानमिव धेनवः ॥ ७
मा स्म ते प्रतिगच्छेयुरष्टकाः सुरपूजिताः । मोघस्तस्य भवेल्लोको लब्धं चास्य विनश्यति ॥ ८
देवांस्तु दायिनो यान्ति तिर्यग्गच्छन्त्यदायिनः । प्रज्ञां पुष्टिं स्मृतिं मेधां पुत्रानैश्वर्यमेव च ॥ ९
कुर्वाणः पौर्णमास्यां च पूर्वं पूर्णं समश्नुते । प्रतिपद्धनलाभाय लब्धं चास्य न नश्यति ॥ १०
द्वितीयायां तु यः कुर्याद्द्विपदाधिपतिर्भवेत् ) । वरार्थिनां तृतीया तु शत्रुघ्नी पापनाशिनी ॥ ११
चतुर्थ्यां कुरुते श्राद्धं शत्रोश्छिद्राणि पश्यति । पञ्चम्यां वै प्रकुर्वाणः प्राप्नोति महतीं श्रियम् ॥
षष्ठ्यां श्राद्धानि कुर्वाणं द्विजास्तं पूजयन्त्युत । कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः ॥
महासत्त्रमवाप्नोति गणानामधिपो भवेत् । संपूर्णामृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः ॥ १४
श्राद्धं नवम्यां कुर्वाण ऐश्वर्यं काङ्क्षितां स्त्रियम् । कुर्वन्दशम्यां तु नरो ब्राह्मीं श्रियमवाप्नुयात् ॥
वेदांश्चैवाऽऽप्नुयात्सर्वान्प्रणाशमेनसस्तथा । एकादश्यां परं दानमैश्वर्यं सततं तथा ॥
द्वादश्यां राष्ट्रलाभं तु जयमाहुर्वसूनि च ॥ १६
प्रजां बुद्धिं पशून्मेधां स्वातन्त्र्यं पुष्टिमुत्तमाम् । दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् ॥ १७
युवानश्च मृता यस्य गृहे तेषां प्रदापयेत् । शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्दशीम् ॥ १८
तथा विषमजातानां यमलानां तु सर्वशः । अमावास्यां प्रयत्नेन श्राद्धं कुर्याच्छुचिः सदा ॥
सर्वान्कामानवाप्नोति स्वर्गमानन्त्यमश्नुते । कृतं दद्यादमावास्यां सोममाप्यायनं महत् ॥ २०
एवमाप्यायितः सोमस्त्रीँल्लोकान्धारयिष्यति । सिद्धचारणगन्धर्वैः स्तूयमानस्तु नित्यशः ॥ २१
स्तवैः पुष्पैर्मनोज्ञैश्च सर्वकामपरिच्छदैः । नृत्यवादित्रगीतैश्च अप्सरोभिः सहस्रशः ॥ २२
उपक्रीडैर्विमानैस्तु पितृभक्तं दृढव्रतम् । स्तुवन्ति देवगन्धर्वाः सिद्धसंघाश्च तं सदा ॥ २३
पितृभक्तस्त्वमावस्यां सर्वान्कामानवाप्नुयात् । प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदा ॥ २४
पितृदेवा मघा यस्मात्तस्मात्तास्वक्षयं स्मृतम् । पित्र्यं कुर्वन्ति तस्यां तु विशेषेण विचक्षणाः ॥
तस्मान्मघां वै वाञ्छन्ति पितरो नित्यमेव हि । पितृदैवतभक्ता ये तेऽपि यान्ति परां गतिम् ॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तिथिविशेषे श्राद्धफलवर्णनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३४७

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग पुस्तके नास्ति ।

१ क. दारधनमूला अष्ट° । २ ख. ङ । °मूलं स्यु° । ३ क. °श्वदेवकी । ४ घ. °पि शक्तितः । प° । घ. °पि शक्तितः । प° । ५ क. घ. °रः सर्वे° । ६ क. प्रज्ञा । ७ ख. ङ. °मावास्यां सर्वं पू° । ८ ■. °नाशनी । ९ ग. ङ, °र्यं स्त्रीप्वकाङ्क्षितम् । कु° । १० ख. ग. ङ. राज्यला° । ११ ख. घ. ङ. °तृदेवस्य म° । १२ ख. ग. घ. ङ. कुर्यात्ततस्तासु वि° । १३ ख. ■. ङ. °णाः । एतस्मान्मघां वा° ।

अथ द्व्यशीतितमोऽध्यायः ।

## श्राद्धकल्पे नक्षत्रविशेषे श्राद्धफलम् ।

बृहस्पतिरुवाच —
यमस्तु यानि श्राद्धानि प्रोवाच[2] शशबिन्दवे । तानि मे शृणु कार्त्स्न्येन नक्षत्रेषु पृथक्पृथक् ॥१
श्राद्धं यः कृत्तिकायोगे करोति सततं नरः । अग्नीनाधाय सापत्यो जायते स गतज्वरः ॥ २
अपत्यकामो रोहिण्यां सौम्येनौजस्विता भवेत् । प्रायशः क्रूरकर्मा तु चाऽऽर्द्रायां श्राद्धमाचरेत्
क्षेत्रभागी भवेत्पुत्री श्राद्धं कुर्वन्पुनर्वसौ । धनधान्यसमाकीर्णः पुत्रपौत्रसमाकुलः ॥ ४
तुष्टिकामः पुनस्तिष्ये श्राद्धं कुर्वीत मानवः । आश्लेषासु पितॄनर्च्य वीरान्पुत्रानवाप्नुयात् ॥ ५
श्रेष्ठो भवति ज्ञातीनां मघासु श्राद्धमाचरन् । फल्गुनीषु पितॄनर्च्य सौभाग्यं लभते नरः ॥ ६
प्रधानशीलः सापत्य उत्तरासु करोति यः । स सत्सु मुख्यो भवति हस्ते यस्तर्पयेत्पितॄन् ॥ ७
चित्रायां चैव यः कुर्यात्पश्येद्रूपवतः सुतान् । स्वातिना चैव यः कुर्याद्विद्यांल्लाभमवाप्नुयात् ॥ ८
पुत्रार्थं तु विशाखासु श्राद्धमीहेत मानवः । अनुराधासु कुर्वाणो नरश्चक्रं प्रवर्तयेत् ॥ ९
आधिपत्यं लभेच्छ्रैष्ठ्यं ज्येष्ठायां सततं तु यः । मूलेनाऽऽरोग्यमिच्छन्ति आषाढासु महद्यशः ॥
आषाढाभिश्चोत्तराभिर्वीतशोको भवेन्नरः । श्रवणेन तु लोकेषु प्राप्नुयात्परमां गतिम् ॥ ११
राज्यभाग्वै धनिष्ठासु प्राप्नुयाद्विपुलं धनम् । श्राद्धं त्वभिजिता कुर्वन्वेदान्साङ्गानवाप्नुयात् ॥
नक्षत्रे वारुणे कुर्वन्भिषक्सिद्धिमवाप्नुयात् । पूर्वे प्रोष्ठपदे कुर्वन्विन्दतेऽजाविकं फलम् ॥ १३
उत्तरास्वनतिक्रम्य विन्देद्गाश्च सहस्रशः । बहुरूपकृतं द्रव्यं विन्देत्कुर्वंस्तु रेवतीम् ॥
अश्वांश्चैवाश्विनीयुक्तो भरण्यामायुरुत्तमम् ॥ १४
इमं श्राद्धविधिं कुर्वञ्शशबिन्दुर्महीमिमाम् । *कृत्स्नां तु लेभे स कृत्स्नां लब्ध्वा च प्रशशंस ताम्॥

इति श्रीमहापुराणे वायुप्रोक्ते नक्षत्रविशेषे श्राद्धफलवर्णनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३६२

अथ त्र्यशीतितमोऽध्यायः ।

## श्राद्धकल्पे पितृकालिकतृप्तिसाधनद्रव्यविशेषगयाश्राद्धादिफल-ब्राह्मणपरीक्षादिकथनम् ।

(+ शंयुरुवाच—
किंचिद्दत्तं पितॄणां [illegible] धिनोति वदतां वर । किं हि स्विच्चिररात्राय किं चाऽऽनन्त्याय कल्पते ॥ )

* एतदर्धस्थान इदमर्धम्—' कृत्स्नां सप्रभतो कृत्वां लब्ध्वा च प्रशशास ताम् इति ' ङ. पुस्तके । + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति ।

१ ख. ङ. °च शशो° । २ ग. शिशिविं । घ. शशविंवि° । ३ ख. ग. घ. ङ. °न् । प्राप्नु° । ४ घ. ङ. °तो । आ° । ५ ख. ग. घ. ङ.उत्तरासु आषाढासु वीत° । ६ ङ. °धनया सूर्ये° । ७ घ. °र्त । पद्म् । प्र° । ८ ङ. °विन्देदश्वाविकं फलम् अ° । ९ ख. घ. ङ. °तुद्धक° । १० ख. ग. घ. [illegible] यो ।

बृहस्पतिरुवाच—

हवींषि श्राद्धकाले तु यानि श्राद्धविदो विदुः । तानि मे शृणु सर्वाणि फलं चैषां यथाबलम् ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च । दत्तेन मासं प्रीयन्ते श्राद्धेन तु पितामहाः ॥ ३
मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन्मासान्हारिणेन तु । शाशं तु चतुरो मासान्पञ्च प्रीणाति शाकुनम् ॥
वाराहेण तु षण्मासांश्छागलं साप्तमासिकम् । आष्टमासिकमित्युक्तं यच्च पार्षतकं भवेत् ॥ ५
रौरवेण तु प्रीयन्ते नव मासान्पितामहाः । गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥ ६
कूर्मस्य चैव मांसेन मासानेकादशैव तु । श्राद्धमेवं विजानीयाद्गव्यं संवत्सरं भवेत् ॥ ७
तथा गव्यसमायुक्तं पायसं मधुसर्पिषा । वध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ८
आनन्त्याय भवेद्युक्तं खाड्गमांसं पितृक्षये । कृष्णच्छागस्तथा गोधा आनन्त्यायैव कल्पते ॥
अत्र गाथाः पितृगीताः कीर्तयन्ति पुराविदः । तास्तेऽहं संप्रवक्ष्यामि यथावत्संनिबोधत ॥
अपि नः स्वकुले जायाद्योऽन्नं दद्यात्त्रयोदशीम् । पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य तु ॥
आजेन सर्वलोहेन वर्षासु च मघासु च । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
* गौरीं वाऽप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत् ॥ १२

शंयुरुवाच—

गयादीनां फलं तात प्रब्रूहि मम पृच्छतः । पितॄणां चैव यत्पुण्यं निखिलेन ब्रवीहि मे ॥ १३

बृहस्पतिरुवाच—

(+अब्दमध्ये गयाश्राद्धं यः करोति च मानवः । सर्वान्कामान्स लभते स्वर्गलोके महीयते १४
यदि पुत्रो गयां गच्छेच्छ्राद्धं कुर्यादतन्द्रितः । कामान्स लभते दिव्यान्मोक्षोपायं च विन्दति ॥
उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कर्पटीवेषं ग्रामस्यापि प्रदक्षिणम् ॥ १६
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् । कृत्वा प्रदक्षिणं गच्छेत्प्रतिग्रहविवर्जितः ॥ १७
केशश्मश्रुनखादीनां वपनं न प्रशस्यते । अतो न कार्यं वपनं श्राद्धार्थी ना गयासदा(?) ॥ १८
वित्तशाठ्यं न कुर्वीत गयाश्राद्धे सदा नरः । वित्तशाठ्यं तु कुर्वाणो न तीर्थफलभाग्भवेत् ॥
ब्रह्मकुण्डे प्रभासे च ब्रह्मवेद्यां तथैव च । प्रेतपर्वतमासाद्य श्राद्धं कुर्याद्विधानतः ॥ २०
उत्तरे मानसे चैव यत्र मैनाकसंज्ञकाः । उदीच्यां कनखले चैव दक्षिणे मानसे तथा ॥ २१
स्नात्वा कृत्वा तथा श्राद्धं पितृलोकं समुद्धरेत् । स्वर्गपातालमर्त्येषु नास्ति तीर्थसमं भुवि ॥२२
तेषु श्राद्धं प्रकुर्वीत यदीच्छेत्परमां गतिम् । धर्मारण्यं ततो गच्छेद्राधं दृष्ट्वा गदाधरम् ॥ २३
मतङ्गं स पुनर्दृष्ट्वा बुद्धं नारायणं तथा । श्राद्धं कृत्वा विधानेन कुलकोटीः समुद्धरेत् ॥ २४
यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्ययात् । तानेव भोजयेद्विप्रान्ब्राह्मणा ये प्रकल्पिताः ॥
अमानुषतया विप्रा ब्राह्मणा ये प्रकल्पिताः । तेषु तुष्टेषु संतुष्टाः पितृभिः सह देवताः ॥ २६
न विचार्यं कुलं शीलं विद्यां च तप एव च । पूजितैस्तैस्तु राजेन्द्र मुक्तिं प्राप्नोति मानवः ॥

---

* इदमर्धं नास्ति घ. पुस्तके । + अब्दमध्य इत्यारभ्य दद्याद्विचक्षण इत्यन्तग्रन्थः ख. पुस्तके वर्ततेऽत्रैव स्थले गयामाहात्म्यमपि तच्चिचत्वारिंशाध्यायादुपरितनं द्रष्टव्यम् ।

---

१ ख. ग. घ. °षा । वार्ध्रीण° । २ ग. घ. ङ. °कं खड्गमांसं पि° । ३ ख. ग. घ. ङ. °षा लोह आ° ।
४ ख. ग. घ. ङ. नःस्वकुले जायाद्यो नोद° ।

